शुद्धिर्यागः स्तुतिर्ध्यानमित्येवं विधिरष्टधा ।
द्विविधः पुरुषो भक्तो दीक्षितोऽदीक्षितस्तथा ॥ ५९ ॥
दीक्षितः सर्वकर्तान्यः समयार्चनमात्रभाक् ।
नित्यार्चा समयो भक्तविश्वासः पूजनादरः ॥ ६० ॥
यत्नः कथाश्रुतिः शान्तिरनाजीवो व्रताष्टकम् ।
स्वारामोत्पादितैः[1] पुष्पैर्वन्यैः क्रीतैस्तु वार्चयेत् ॥ ६१ ॥
प्रतिग्राह्यं न पूजार्थं दातुरेव फलं यतः ।
अलाभे गन्धपुष्पाभ्यां पुष्पैरपि स[2]मर्चयेत् ॥ ६२ ॥
पुष्पालाभे तु तोयेन तोयालाभे तु चेतसा ॥ ६३[3] ॥

इति विष्णुसंहितायां चतुर्थः पटलः ।

---

अथ पञ्चमः पटलः ।

अथ वक्ष्यामि संक्षेपान्मन्त्रोद्धारविधिं परम् ।
यस्मिन् सम्यक्कृते मन्त्रा वीर्यवन्तः स्युरिष्टदाः ॥ १ ॥
विविक्ते सुसमे देशे शुचौ स्निग्धे मनोरमे ।
पुष्पप्रकरसंकीर्णे मन्त्रोद्धारं समाचरेत् ॥ २ ॥
स्नात्वाचान्तः कृतन्यासो गन्धपुष्पाद्यलंकृतः ।
सानुगः प्रयतो मन्त्री सूत्रपातं प्रकल्पयेत् ॥ ३ ॥
चतुष्षष्टिपदं कृत्वा चन्दनेन सुगन्धिना ।
आदिहान्तां समालिख्य मातृकामष्टवर्गिणीम् ॥ ४ ॥
आदिपङ्क्तौ द्विशो वर्गं वर्गशोऽन्यत्र चान्ततः ।
नादात् सर्वगतादष्टवर्गोत्पत्तिमनुस्मरेत् ॥ ५ ॥

---

१. 'तैर्द्रव्यैर्वे' क. पाठः. २. 'त' ख. ग. घ. पाठः. ३. 'ता' क. पाठः.

नादोऽकारः स्वयं जातो वासुदेवात्मकस्ततः ।
संकर्षणाख्ययाकार[1] इकारश्च शिवाख्यया ॥ ६ ॥
ईकारश्च ततो जातस्तौ च संकर्षणात्मकौ ।
ब्रह्मोकारोऽत ऊकारः प्रद्युम्नाख्यौ च तौ स्मृतौ ॥ ७ ॥
हंसाख्योऽस्माद्दकारोऽत ॠकारश्चानिरुद्धकः ।
ऌकारो महदाख्योऽज ॡकारश्च ततोऽजनि ॥ ८ ॥
ततो रुद्राख्य एकार ऐकारश्चाप्यनन्तरः ।
प्राजापत्याख्य ओकार औकारश्च तदात्मकः ॥ ९ ॥
बिन्दुस्तस्माद्धरीशात्मा विसर्गोऽस्माच्च ते स्वराः ।
तस्माद्धरीशाद् ब्राह्मयादिमातृभेदेन सप्तधा ॥ १० ॥
कादिवर्गा यशादी च न्यस्तव्यास्तेऽन्यपङ्क्तिषु ।
एवं सरस्वतीं देवीमष्टवर्गात्मिकां शुभाम् ॥ ११ ॥
गन्धपुष्पैर्यजेद् वर्णदेवतानामभिः क्रमात् ।
ततो गारुडमश्विभ्यामुद्धृतं वर्णहारकम् ॥ १२ ॥
यमाख्यमोद्धयं[2] चेष्ट्वा तेन मन्त्रान्[3] समुद्धरेत् ।
प्रणवाष्टाक्षरोद्धारे वासुदेवः स्वयं भवेत् ॥ १३ ॥
षट्के संकर्षणो ब्रह्मा गायत्र्यां चाक्रिके हरः ।
प्रद्युम्नस्त्वजितोद्धारे नारसिंहेऽनिरुद्धकः ॥ १४ ॥
वासुदेवादिभिः स्वे स्वे बीजमन्त्राश्च हेतवः ।
आदित्येनैव तूद्धार्याः पञ्चोपनिषदादयः ॥ १५ ॥
आद्यादिमुद्धरेत् पूर्वं पुनस्तत्रैव पञ्चमम् ।
षष्ठान्तं चादिवर्गोनं त्रयमेकत्र योजयेत् ॥ १६ ॥

---

१. 'दीर्घस्तदाख्य' ख. ग. पाठः. २. 'मौद्धयं' क. पाठः. ३. 'सर्वान्' ख. ग. घ. पाठः.

एतत् तत् परमं तत्त्वमक्षरं परमं पदम् ।
अनेनैवार्चनं विष्णोर्जपो होमश्च मोक्षदः ॥ १७ ॥
त्रिदेवगुणवेदाग्निसन्ध्यालोकदशास्वयम् ।
वेदादिरक्षरव्याप्त्या सर्वमन्त्रादितां गतः[2] ॥ १८ ॥
पञ्चमान्तं परं तारात् षष्ठान्तं सत्रयोदशम् ।
देवनाम चतुर्थ्यन्तमित्येतन्मन्त्रलक्षणम् ॥ १९ ॥
एवं षडक्षरो मन्त्रो निर्बीजोऽष्टाक्षरस्तथा ।
द्विषट्के भगवच्छब्दो नमस्कारात् परो भवेत् ॥ २० ॥
बीजं[3] तारादिनत्यन्तं सर्वत्राख्या न चेत् परा ।
यत्राख्या तु चतुर्थ्यन्ता नमस्कारस्तदान्ततः ॥ २१ ॥
चतुर्थमष्टमे बीजमादिषष्ठान्तबिन्दुकम्[4] ।
हृदयं तद्बीजस्य विष्णुबीजं च यद् विदुः ॥ २२ ॥
द्वितीयाद्यं शिरश्चास्य बिन्द्वन्तमुपकल्पयेत् ।
अष्टमाद्यं शिखाबीजं तृतीयस्वरभेदितम् ॥ २३ ॥
चतुर्थं कवचं चान्त्ये पञ्चमस्वरबिन्दुमत् ।
तदेवास्त्रं भवेत् तस्य षोडशस्वरसंयुतम् ॥ २४ ॥
एतत् पञ्चाङ्गमुद्दिष्टं निर्बीजस्य षडात्मनः ।
यदाख्याजातिभिर्युक्तं सर्वकामप्रदं विदुः ॥ २५ ॥
हृद्बीजं मूलमङ्गानि द्विचतुष्षष्ठयोगतः ।
नेत्रान्तानि षडप्याहुर्द्वादशान्त्यचतुर्दशैः ॥ २६ ॥
नमोन्तानि निराख्यानि साख्यानि तु सबीजके ।
प्रणवानन्तरं बीजमनन्ते चेन्नमोन्वितम् ॥ २७ ॥

---

१. 'तु प' क. पाठः. २. 'तम्', ३. 'जता' ग. पाठः. ४. 'मत्',
५. 'दस्य' ख. ग. पाठः.

सबीजस्येदमुद्दिष्टं मूलमन्त्रस्य लक्षणम् ।
तास्मात् सबिन्दुकैर्वर्णैः स्वरभेदितबीजकैः ॥ २८ ॥
नमोन्ताख्यैः[1] षडङ्गानि नेत्रान्तं तत् प्रकल्पयेत् ।
हृदयं कुन्दसङ्काशं शिरो भिन्नाञ्जनप्रभम् ॥ २९ ॥
शिखा तु पिङ्गला ज्ञेया कवचं हेमसन्निभम् ।
विद्युदाकारमस्त्रं स्यान्नेत्रं ज्वलनसन्निभम् ॥ ३० ॥
ज्ञानसन्तोषनित्यत्वस्वातन्त्र्याविघ्नवैभवैः ।
हृदयादिगुणैर्युक्तः सकलोऽनुग्रहादिकृत् ॥ ३१ ॥
स्वाहाकारवषट्कारौ होमे शान्तिकपौष्टिके ।
नमस्कारो जपार्चादावैश्वर्ये प्रणवोऽन्ततः[2] ॥ ३२ ॥
आदौ तारनमोमध्ये बिन्द्वन्ताः षोयरावलाः ।
पराय भगवत्स्थाने पञ्चोपनिषदादिषु ॥ ३३ ॥
प्रथमः परमेष्ठ्यात्मा पुरुषात्मा तथापरः ।
विश्वात्माथ[3] निवृत्त्यात्मा सर्वात्मा पञ्च ते स्मृताः ॥ ३४ ॥
आवाहने विसर्गे च योज्याः पञ्च क्रमोत्क्रमात् ।
प्रोक्षणे शान्तिहोमे च द्रव्यशुद्धौ च कीर्तिताः ॥ ३५ ॥
पुरुषः प्रकृतिश्चोभौ जीवप्राणसमाह्वयौ ।
बुद्ध्यहंकारसङ्कल्पास्तन्मात्राणीन्द्रियाणि च ॥ ३६ ॥
भूतानि[4] चेति बिन्द्वन्तैर्मादिकान्तैरनुक्रमात् ।
पञ्चविंशतितत्त्वानि विज्ञातव्यानि देशिकैः ॥ ३७ ॥
अष्टमान्त्यं स्वरान्त्याभ्यां[5] कालदिङ्मन्त्रयोः क्रमात् ।
खकारो वैनतेयस्य विघ्नेशस्य ततः परम् ॥ ३८ ॥

---

१. 'न्तान्यस्य क' ख. ग. घ. पाठः. २. 'वे', ३. 'च', ४. 'कू', ५. 'न्तः स्वरान्ताभ्यां' ख. ग. पाठः.

कालबीजमनन्तस्य दीर्घैरङ्गानि तस्य षट् ।
अक्षबीजं तु वर्णान्त्यं चक्रमण्डलकल्पने ॥ ३९ ॥
पद्मस्य[1] प्रणवोऽस्यांशाः पत्रकेसरकर्णिकाः ।
ह्रस्वाक्षराणि बीजानि नाभिस्थे सवनत्रये ॥ ४० ॥
असंवृतस्वरैः कालमरै[2]मासेषु योजयेत् ।
अविसर्गैः स्वैरराद्यैर्वामदक्षिणपार्श्वयोः ॥ ४१ ॥
राशीनां तैर्विसर्गाद्यैरप्यूह्यास्तिथयो द्विधा ।
अश्वयुक्प्रभृतीन्येषु नक्षत्राणि यथाक्रमम् ॥ ४२ ॥
बिन्द्वन्तैरादिकान्तैस्तु हादिमान्तैर्नव ग्रहाः ।
अर्कादयः स्वराशिस्था राहुकेतू च यद्वतौ ॥ ४३ ॥
सकारश्च षकारश्च नेम्योरन्तर्बहिष्ठयोः ।
प्रकृत्यादीनि तत्त्वानि योज्यानी[3]ह पृथक् क्रमात् ॥ ४४ ॥
द्वादशाक्षरबीजैस्तु योज्या विष्ण्वादयोऽस्गाः ।
ऋतवो मूलबीजैस्तु वसन्ताद्या यथाक्रमम् ॥ ४५ ॥
चक्रमण्डलयागे तु विशेषोऽयमिहोदितः ।
भद्रकस्थण्डिलार्चासु न मन्त्राः कालसंश्रयाः ॥ ४६ ॥
नामाष्टकै[5]द्विषट्कस्थं विद्महेधीमहेन्वितम् ।
क्रमेण कल्पयेत् तन्नो विष्णुरन्ते प्रचोदयात् ॥ ४७ ॥
गायत्री वैष्णवी ज्ञेया सर्वपापहरा त्वियम् ।
यद् दत्तमनया सर्वं प्रतिगृह्णाति देवराट् ॥ ४८ ॥

---

१. 'चक्रस्य', २. 'रं मासे', ३. 'नि प्रथिषु क' ख. ग. पाठः.
४. 'यां', ५. 'के' क. पाठः.

उपचारे च योक्तव्या पक्वे पूर्णाहुतौ च सा ।
सहस्रारेति संकीर्त्य हुंकारं फट् च योजयेत् ॥ ४९ ॥

षडक्षरमिदं ज्ञेयं सुदर्शनमखण्डितम् ।
क्षुद्रभूतपिशाचादिवारणं रोगनाशनम् ॥ ५० ॥

सचतुर्दशबिन्द्वन्त्यं नारसिंहं च तादृशम् ।
विलोमाष्टमवर्गार्णैस्तारपूर्वैरबिन्दुभिः ॥ ५१ ॥

वासुदेवादयो योज्या नमोन्ता दिक्षु मूर्तयः ।
दीर्घैस्तैरेव कोणेषु शान्तिः श्रीश्च सरस्वती ॥ ५२ ॥

रतिश्चेति क्रमाद् योज्याश्चतस्रो मूर्तिशक्तयः ।
अष्टमस्यादिबीजं तु द्विसप्तान्तेन संयुतम् ॥ ५३ ॥

सप्तमस्य द्वितीयं च तृतीयं च तथा भवेत् ।
द्वितीयस्य तृतीयं च तृतीयावरणे क्रमात् ॥ ५४ ॥

दीर्घोऽन्त्यादिस्तु बिन्द्वन्तो[2] द्वितीयस्य द्वितीयकः ।
बिन्द्वेकादशसंयुक्तः सोऽन्त्यादिश्च सबिन्दुकः ॥ ५५ ॥

दिक्कोणेषु क्रमादष्टौ बीजानि कथितानि च ।
वर्गादिभिः क्रमाद् बीजैरिन्द्राद्याः परितः स्मृताः ॥ ५६ ॥

वज्रादयोऽस्त्रमन्त्राश्च तद्द्वितीयैः सबिन्दुभिः ।
विष्वक्सेनोऽन्तवौंकारो नमोन्तः परिकीर्तितः ॥ ५७ ॥

सर्वासां देवतानां तु गुणशक्तिसमन्वयात् ।
बीजानि कल्पयेद् विद्वान् पञ्चरात्रविशारदः ॥ ५८ ॥

---

१. 'प्र' क. घ. पाठः. २. 'न्तौ' ख. ग. पाठः.

अक्षराणि तु वाक् प्रोक्ता न सा प्रक्षीयते किल ।
तस्माद् वर्णे गृहीतेऽपि[1] न शून्यं पुटमुच्यते ॥ ५९ ॥
व्यञ्जनानि स्वरानत्र गृह्णीयाच्च पृथक् पृथक् ।
तद् गृहीतं गृहीतं च सन्धयित्वान्यदुद्धरेत् ॥ ६० ॥
सकलीकरणं नाम मन्त्रसंस्कार उत्तमः ।
तस्मादुद्धरणं कार्यमिष्ट्वा कोष्ठेषु मातृकाम् ॥ ६१ ॥
अन्क्षरेषु कोष्ठेषु पूजयेन्मन्त्रमुद्धृतम् ।
एवं समुद्धृता मन्त्राः प्रणवोद्दीपिता[2]क्षराः ॥ ६२ ॥
वीर्यवन्तो भविष्यन्ति भुक्तिमुक्तिफलप्रदाः ।
गत्वैकान्ते शुचौ देशे स्नाताचान्तो जितेन्द्रियः ॥ ६३ ॥
मण्डले देवमाराध्य साङ्गं सावरणं क्रमात् ।
जपेत् षड्विंशतिं लक्षा[3]न् व्रतस्थोऽ[4]नन्यमानसः ॥ ६४ ॥
तिलानां घृतमिश्राणां सहस्रं चैव होमयेत् ।
ततस्तु सिध्यते मन्त्रो वरदश्चापि जायते ॥ ६५ ॥
सप्तलोक्यां यदिष्टं स्यादात्मनः सुखसाधनम् ।
तद्भोग्यत्वमनेनाशु याति ध्यानप्रयोगतः ॥ ६६ ॥
देवशक्तिरमोघैषा न क्वचित् प्रतिहन्यते ।
देवदानवयक्षेषु किम्पुनर्मानुषे[5] जने ॥ ६७ ॥
यक्षिणी किन्नरी चाथ दिव्ययोषा च मानुषी ।
तस्य षट्पञ्चसप्तैकमासतः किंकरी भवेत् ॥ ६८ ॥

१. 'तु', २. 'ताः क्रमात् ॥ वी' ख. ग. पाठः. ३ 'क्षं' क. पाठः. ४. 'नान्य' ख. ग. पाठः. ५. 'ष्या या या च' क. पाठः.

नाम संकीर्त्य साध्याया बीजान्ते वशमेत्विति ।
बीजमन्ते च योक्तव्यं ज्वलद्वह्निस्फुलिङ्गमुक् ॥ ६९ ॥
क्रुद्धं[1] प्लुतप्रयोगेण साधयेदचिराद् बलात् ।
एवमेवाभिचारेषु फट्कारान्तं प्रयोजयेत् ॥ ७० ॥
नामान्ते नाशमायातु विशेषोऽयं च विद्यते ।
नामान्ते नम इत्युक्त्वा ततो बीजं विचिन्तयेत् ॥ ७१ ॥
आकर्षे च वशीकारे विशेषोऽयमिहोदितः[2] ।
विसंज्ञं विह्वलं साध्यमायान्तं चिन्तयेदलम् ॥ ७२ ॥
कलशो हेमरत्नाढ्यस्तद्धृतोऽविरतां वहन् ।
ध्येयः स्वपुरतो धारां धनस्यापरिमाणतः ॥ ७३ ॥
भूतिकामस्य योगोऽयं नाम्ना वैश्रवणस्य हि ।
प्रयच्छत्विति नामान्ते वसुनाम सनामकम् ॥ ७४ ॥
वशीकारे परां कन्यामाप्नोति चिरमभ्यसन् ।
लभ्यतामिति नामान्ते तस्याः संपरिकीर्तयेत् ॥ ७५ ॥
उच्चाटे गच्छतु ज्ञेयमायात्वानयनेऽभ्यसेत् ।
प्रीतावावहतु प्रीतिं विद्वेषे द्वेषमृच्छतु ॥ ७६ ॥
यत् सिसाधयिषुर्विद्वानिदं सिद्धं पुनर्जपेत् ।
तस्य सिध्यति तत् क्षिप्रं किन्तु श्रद्धाभियोगतः ॥ ७७ ॥
हृद्बीजं तु प्लुतं चिन्त्यं ज्वलदष्टतनौ स्थितम् ।
अनेनैवात्मनः कृत्वा सकलीकरणं तनौ ॥ ७८ ॥

---

१. 'रु' क. पाठः. २. 'हेरितः' ख. ग. पाठः.

येन येन स्वरेणैतद् युक्तं यत्र नियुज्यते ।
तदेतत् साधयत्याशु न मोघमिति धारणा ॥ ७९ ॥

इति विष्णुसंहितायां पञ्चमः पटलः ॥

---

## अथ षष्ठः पटलः ।

अथ वक्ष्यामि संक्षेपात् स्नानाचामादि पूजनम् ।
येन सम्यक्कृतेनेह साधकः सिद्धिमाप्नुयात् ॥ १ ॥
तीर्थे नद्यां तटाके वा सुधीर्गत्वा कुशादिमान् ।
मृदमस्त्रेण सङ्गृह्य सर्वदोषविवर्जिताम् ॥ २ ॥
अस्त्रेण क्षालिते तीर्थे संस्थाप्य विभजेत् त्रिधा ।
अस्त्रेण च हृदा प्रोक्ष्य भागांस्तान् कवचेन च ॥ ३ ॥
प्रदक्षिणं परिक्रम्य नमस्कृत्वाथ तज्जलम् ।
पूर्वांशेन मलस्नानं कृत्वा मज्जेत् त्रिरोमिति ॥ ४ ॥
द्वितीयेनालभेत् पश्चादाचम्य विधिपूर्वकम् ।
तृतीयं दिक्षु सर्वासु क्षिपेद् विघ्नोपशान्तये ॥ ५ ॥
प्रतिस्रोतः पुनर्मज्जेत् तीर्थं ध्यात्वा तु वैष्णवम् ।
तीर्थं पुनः समासाद्य विधिनाचम्य वाग्यतः ॥ ६ ॥
मन्त्रन्यासं क्रमात् कृत्वा प्रोक्ष्य मूलादिभिस्तथा ।
ततश्चाचम्य कुर्वीत प्राणायामत्रयं क्रमात् ॥ ७ ॥
मूलमन्त्रेण साङ्गेन व्यस्तेन[2] सुसमाहितः ।
नाभ्या[3]श्लिष्टेन तोयेन[4] ततस्तेनाघमर्षणम् ॥ ८ ॥

---

१. 'सम्यक्प्रक्षा' क., 'निलायक्षा' घ. पाठः. २. 'व्यस्त्रेण सु' क. पाठः. ३. 'भ्यां' ख. ग. पाठः. ४. 'तत्त्वेन' क. पाठः.

समस्तेन समुद्दिष्टं सर्वपापहरं तथा ।
कृत्वाभिषेकमुत्तीर्य परिधाय सिताम्बरम् ॥ ९ ॥
आचान्तो न्यस्य सम्प्रोक्ष्य कुशाग्रैः पूर्ववत् क्रमात् ।
उपविश्य शुचौ देशे प्राणायामत्रयं चरेत् ॥ १० ॥
परतत्त्वेन कृत्वैवं नमस्कृत्य च मार्जयेत् ।
उपस्थानं ततः कुर्यात् परतत्त्वेन देशिकः ॥ ११ ॥
ध्यात्वा ज्योतिर्मयं विष्णुं मण्डलस्थं जलार्घ्यदः ।
स्थित्वाष्टोत्तरजप्तेन मूलमन्त्रशतेन तु ॥ १२ ॥
गायत्र्या चैव वैष्णव्या प्रणवाद्यन्तरुद्धया ।
उपविश्य शुचौ देशे ततस्तर्पणमारभेत् ॥ १३ ॥
विष्ण्वादिदेवताश्चर्षीन् मनुष्यांश्च पितॄंस्तथा ।
तर्पयेत् तानशेषेण पश्चात् तीर्थं तु संहरेत् ॥ १४ ॥
मूलमन्त्रं जपन् गच्छेद् वाग्यतश्चिन्तयन् हरिम् ।
आजानु पादौ प्रक्षाल्य हस्तावाकोर्परं पुनः ॥ १५ ॥
त्रिः पिबेद् ब्रह्मतीर्थेन द्विरुन्मृज्य मुखं पुनः ।
वामहस्तं च पादौ च प्रोक्ष्याङ्गानि पुनः स्पृशेत् ॥ १६ ॥
वेदास्त्रयस्त्रिभिः पानैः पितरश्च पितामहाः ।
क्रमेशस्तृप्तिमायान्ति[1] तथैव प्रपितामहाः ॥ १७ ॥
मार्जने प्रथमे ब्रह्मा द्वितीये दक्ष एव च ।
तत्राथर्वेतिहासाश्च तृप्तिमायान्ति संस्मृताः ॥ १८ ॥
चक्षुषोः स्पृष्टयोस्तृप्तिं चन्द्रादित्यौ प्रयास्यतः ।
अङ्गुष्ठेऽनामिकां कृत्वा तर्जनीं पवनो नसोः ॥ १९ ॥

---

१. 'भेण तृप्ति' ख. ग. पाठः.

कनिष्ठां कर्णयोर्दस्रौ बाह्वोरङ्गुष्ठकेन च ।
शक्रशैलाश्च तृप्यन्ति नाभौ विष्णुश्च मध्यया ॥ २० ॥
महाविष्णुः सदा विष्णुश्चतुर्भिर्हृदि केऽखिलैः ।
एतदाचमनं प्रोक्तं दीक्षितस्य विशेषतः ॥ २१ ॥
यागस्थानं समासाद्य देवं संस्मृत्य वाग्यतः ।
अस्त्रेण गृहमालोक्य वेदिं स्थण्डिलमेव च ॥ २२ ॥
ततः प्रदक्षिणीकृत्य नमस्कृत्य समाहितः ।
कृत्वोपवीतवद्वस्त्रमुत्तरं प्राङ्मुखः शुचिः ॥ २३ ॥
नारसिंहेन दिग्बन्धं कृत्वा पद्मासनस्थितः ।
परतत्त्वं समुच्चार्य कृत्वा ब्रह्माञ्जलिं शुभम् ॥ २४ ॥
प्राणायामत्रयं कुर्याद् धारणात्रयसंयुतम् ।
नाभिमण्डलमध्ये यं धूम्रं चण्डानिलात्मकम् ॥ २५ ॥
विश्लेषयदघं देहात् सर्वगात्रोपशोषकम् ।
धारयेद्धृदये चाग्निं तारेणार्कादुपाहृतम् ॥ २६ ॥
ज्वालाभिस्तिर्यगूर्ध्वाधो दहन्तं काष्ठवत् तनुम् ।
शिखान्ते जीवमायोज्य बीजेन सुसमाहितः ॥ २७ ॥
गत्वा सुषुम्नारन्ध्रेण ततोऽर्कस्योपरिस्थितात् ।
चन्द्रादमृतमानीय स्वतनुं भस्मसात्कृताम् ॥ २८ ॥
प्लावयित्वा नवं देहं पार्थिवैः परमाणुभिः ।
जलबुद्बुदमध्यस्थं प्राजापत्यं तु कल्पयेत् ॥ २९ ॥
आत्मानं योजयित्वात्र सर्वज्ञं गतकल्मषम् ।
अस्त्रशोधितयोर्मूलं करयोर्व्यापकं न्यसेत् ॥ ३० ॥

१. 'सूर्यात्मानं योजयित्वा स' ख. ग. पाठः.

दक्षिणेऽङ्गुष्ठमारभ्य बीजानि क्रमशो न्यसेत् ।
ताराद्यन्तानि वामेऽपि तलान्तमुभयत्र तु ॥ ३१ ॥
अङ्गानि च तयोर्न्यस्य सर्वाङ्गे व्यापकं न्यसेत् ।
प्रथमं मूर्ध्नि विन्यस्य ललाटे च द्वितीयकम् ॥ ३२ ॥
तृतीयं हृदये चैव चतुर्थं नाभिमण्डले ।
पञ्चमं तु न्यसेदूर्वोः पादावस्थं तु षष्ठकम् ॥ ३३ ॥
सृष्टिन्यासोऽयमासाने कर्तव्यः काम्यसिद्धये ।
स्थिते कुर्यात् स्थितिन्यासं नाभ्यादि हृदयान्तकम् ॥ ३४ ॥
शयिते संहृतिन्यासं पादादि प्रतिलोमतः ।
स्थितिन्यासो गृहस्थस्य सृष्ट्याख्यो ब्रह्मचारिणः ॥ ३५ ॥
मुमुक्षोः संहृतिन्यास एवं न्यासस्त्रिधा स्मृतः ।
एवं न्यासविधिं कृत्वा ताराद्यन्तैः षडक्षरैः ॥ ३६ ॥
हृदयादीनि चाङ्गानि स्वस्थानेषु नियोजयेत् ।
जप्त्वा मन्त्रं ततोऽस्त्रेण संविध्य शकलं त्यजेत् ॥ ३७ ॥
पुष्पमस्त्रेण च क्षिप्त्वा सम्भारानुपकल्पयेत् ।
अस्त्रक्षालितपात्रस्थे गन्धपुष्पान्विते जले ॥ ३८ ॥
मन्त्रं न्यस्याष्टकृत्वस्तु प्रणवेनाभिमन्त्रयेत् ।
ततस्तु प्रोक्षणं कुर्यादस्त्रमन्त्रेण सर्वतः ॥ ३९ ॥
फट्कारान्तेन मेधावी ततः पीठं प्रकल्पयेत् ।
मण्डले स्थण्डिलेऽर्चायां पूजयेद्धृदि वा बुधः ॥ ४० ॥

---

१. 'णा', २. 'म' ख. ग. घ. पाठः. ३. 'स्वस्वस्थाने नि' ख. ग. पाठः.

स्थण्डिलाद्यर्चनात् सिद्धो हृत्पद्मे मनसार्चयेत् ।
धर्माधर्मादिपादेषमनन्तमयमासनम् ॥ ४१ ॥
त्रिगुणाकलितं मायाविद्यासितासितास्तरम् ।
विपुलं स्थण्डिलेऽभ्यर्च्य गन्धपुष्पैर्यथाक्रमम् ॥ ४२ ॥
तस्योपरि तथा पद्मं प्रणवेन समाहितः ।
तदंशैः सूर्यसोमाग्निमण्डलात्मत्रयं पुनः ॥ ४३ ॥
उपर्युपरि सङ्कल्प्य पत्रकेसरकर्णिकाः ।
विमलोत्कर्षिणी ज्ञाना क्रिया योगा[२] यथाक्रमम् ॥ ४४ ॥
प्रह्वी सत्या तथेशा च[३] केसरेष्वष्ट शक्तयः ।
मध्यतोऽनुग्रहा चान्ते पूज्याः सर्वार्थसिद्धये ॥ ४५ ॥
हृद्येवं योगपीठस्थं ध्यात्वा विष्णुमतन्द्रितः ।
क्षालिते तैजसे पात्रे गन्धपुष्पयुतोदके ॥ ४६ ॥
प्रणवेन स्मरेद् विष्णुमव्यक्तस्योपरिस्थितम् ।
[४]विष्णुमूर्तिं ततो ध्यात्वा सर्वतेजोमयं विभुम् ॥ ४७ ॥
कर्णिकोपरि सञ्चिन्त्य निरुध्य सकलीकृतम् ।
पूजयेत् साङ्गमव्यग्रो भक्त्यार्घ्यादिभिरच्युतम् ॥ ४८ ॥
पूर्वेण हृदयं न्यस्य दक्षिणेन शिरस्तथा ।
पश्चिमेन शिखां चैव कवचं चोत्तरेण तु ॥ ४९ ॥
आग्नेयादिषु कोणेषु पूजयेदस्त्रमुत्तमम् ।
वासुदेवादिकान् न्यस्य दिक्षु शक्तीश्च कोणतः ॥ ५० ॥
तद्बहिः शङ्खचक्राब्जगदा दिक्षु निवेशयेत् ।
कोणेषु च ततः शार्ङ्गखेटखड्गशरान् न्यसेत् ॥ ५१ ॥

---

१. 'तां तनुम्', २. 'गेति शक्तयः', ३. 'ना' ख. ग. पाठः.
४. 'अमूर्तं तु त' ख. ग., 'अमूर्तं तं त' घ. पाठः.

इन्द्रमग्निं यमं चैव निर्ऋतिं वरुणं तथा ।
वायुं सोमं तथेशानं स्वासु दिक्षु क्रमान्न्यसेत् ॥ ५२ ॥
वज्रं शक्तिं च दण्डं च खड्गं पाशं ध्वजं तथा ।
गदां त्रिशूलं च बहिस्तेषामस्त्राणि कल्पयेत् ॥ ५३ ॥
अग्रतो वैनतेयं तु तृतीयावरणाद् बहिः ।
विष्वक्सेनं तथैशान्यां द्वितीयावरणाद् बहिः ॥ ५४ ॥
सर्वेषामपि चैतेषां प्रत्येकं पद्ममासनम् ।
नामभिः कल्पयेद् विद्वानर्घ्यं देवाय भक्तितः ॥ ५५ ॥
पाद्यमाचमनीयं च स्नानमालेपनं तथा ।
वस्त्रालङ्कारपुष्पाणि धूपदीपनिवेद्यकम् ॥ ५६ ॥
तत्सर्वं विष्णुगायत्र्या दातव्यं तु यथाक्रमम्[1] ।
दत्त्वा देवाय भूषान्तं स्नानाद्यङ्गेषु कल्पयेत् ॥ ५७ ॥
गायत्र्या च ततः पुष्पं देवायान्येभ्य एव च ।
व्यस्तेन मूलमन्त्रेण समस्तेन च तैः सह ॥ ५८ ॥
यागोऽयं तस्य विज्ञेयः सदान्येऽर्च्याः स्वनामभिः ।
परतत्त्वेन[2] व्याप्यान्ते पूजयेत् तं सनातनम् ॥ ५९ ॥
धूपं दीपं निवेद्यं च दत्त्वास्मै विधिपूर्वकम् ।
यथासम्भवतोऽन्येषां निवेद्यमुपकल्पयेत् ॥ ६० ॥
अग्नौ च कल्पयेत् साङ्गं योगपीठस्थमुज्ज्वलम् ।
परिस्तरणपर्युक्षापवित्रकरणादि यत् ॥ ६१ ॥
प्रणवेनैव सर्वं तत् कृत्वाथाज्येन होमयेत् ।
दशांशमङ्गमूर्त्तीनामन्येषामेकशः क्रमात् ॥ ६२ ॥

१. 'क्रमात्' ख. ग. पाठः. २. 'न चाप्यन्ते' ख. ग. घ. पाठः.

नमः पारिषदेभ्यश्चेत्यष्टदिक्षु बलिं हरेत् ।
आचम्य सकलीकृत्य जप्त्वा स्तुत्वा प्रणम्य च ॥ ६३ ॥
अर्घ्यं दत्त्वा क्षमस्वेति संहृत्य हृदि योजयेत् ।
ध्यायेज्ज्योतिर्मयं देवं शङ्खचक्रगदाधरम् ॥ ६४ ॥
पीतवस्त्रमुदाराङ्गं सर्वाभरणभूषितम् ।
शुद्धस्फटिकसङ्काशं वासुदेवं चतुर्भुजम् ॥ ६५ ॥
शङ्खचक्रगदापाणिं धृतश्रीवत्सकौस्तुभम् ।
तथा सङ्कर्षणं ध्यायेज्जातरूपसम[1]प्रभम् ॥ ६६ ॥
दूर्वामरकतप्रख्यं प्रद्युम्नं च तथा स्मरेत् ।
नीलाम्बुदप्रतीकाशमनिरुद्धं तथैव च ॥ ६७ ॥
शान्तस्फटिकसङ्काशां श्रियं पद्मरजःप्रभाम् ।
सरस्वतीं तथारूपां रतिं श्यामां तु चिन्तयेत् ॥ ६८ ॥
शुक्लवर्णं तथा शङ्खं चक्रमग्निसमप्रभम् ।
गदां चैव हरिद्राभां सुवर्णाभं तु पङ्कजम् ॥ ६९ ॥
गदां स्त्रीलक्षणैर्युक्तां सर्वसंहारकारिणीम् ।
खड्गमाकाशसंकाशं ध्यायेच्चक्रसमाकृतिम् ॥ ७० ॥
शार्ङ्गं च तत्समं पीतमधोभागे गदासमम् ।
शरं च धनुराकारं खेटकं खड्गसन्निभम् ॥ ७१ ॥
चक्रमुग्रं प्रभूताक्षं नाभ्यरप्रथिनेमिकम् ।
लेलिहानं दुरालोकं [2]भ्रमद्वह्निस्फुलिङ्गमुक् ॥ ७२ ॥
चतुर्बाहुं द्विबाहुं वा दंष्ट्रिणं पिङ्गमूर्धजम् ।
लम्बोदरं तथा शङ्खं ह्रस्वकुञ्चितमूर्धजम् ॥ ७३ ॥

१. 'मयं प्रभुम्' ग. पाठः. २. 'चलद्व' ग., 'ज्वलद्व' ख. पाठः

इन्द्रः श्यामो यमः पीतो वरुणः श्याम एव च।
शङ्खामलरुचिः सोमो वह्निः शोणस्तु कीर्तितः ॥ ७४ ॥
सदंष्ट्रो नैर्ऋतिः श्यामो वायुर्धूम्रः प्रशस्यते।
ईशानस्तु भवेद् रक्त एवं ध्यायेत् क्रमादिमान् ॥ ७५ ॥
इन्द्राकारं भवेद् वज्रं चित्रशास्त्रोदितं तु वा।
एवमस्त्राणि दिक्पानामन्येषां च प्रकल्पयेत् ॥ ७६ ॥
अग्निवर्णश्चतुर्बाहुस्तार्क्ष्यो लूनाग्रनासिकः।
ग्रसन्निव दृशा ध्येयो महापक्षो महाबलः ॥ ७७ ॥
विष्वक्सेनोऽभ्रवर्णस्तु शङ्खचक्रगदाधरः।
पञ्चमूर्धा चतुर्बाहुरनन्तः पृष्ठतो हरेः ॥ ७८ ॥[1]
ध्येयोऽन्ये पार्षदास्तस्य ज्ञातव्याश्चागमान्तरे।
योऽनेन विधिना विष्णुं पूजयेद् भक्तिमान् नरः ॥ ७९ ॥
तस्य हस्तगताः कामा इहामुत्र च योगिनः ॥ ७९[2] ॥

इति विष्णुसंहितायां षष्ठः पटलः ॥

---

## अथ सप्तमः पटलः।

अथ वक्ष्यामि संक्षेपान्मुद्राणां लक्षणं परम्।
न्यासादिषु प्रयुज्यन्ते यथा मुद्राः सुगोपिताः ॥ १ ॥
अञ्जलिः प्रथमा मुद्रा क्षिप्रं देवप्रसादनी।
वन्दनी हृदयासक्ता किञ्चिद् दक्षिणतो नता[3] ॥ २ ॥

---

१. 'हुरनन्तः पृष्ठतो हरेः' ख. ग. पाठः. २. 'अर्चनाध्यायः ॥' घ. पाठः. ३. 'न्न'. ख. ग. पाठः

ऊर्ध्वाङ्गुष्ठो वाममुष्टिर्दक्षिणोऽङ्गुष्ठबन्धनः ।
वामस्य[1] तस्य चाङ्गुष्ठो भवत्यूर्ध्वमुखः स्थितः ॥ ३ ॥
तिस्रः साधारणा मुद्रा मूर्तीनामिह कीर्तिताः ।
पद्मासनगतो मूर्ध्नि कुर्यादञ्जलिबन्धनम् ॥ ४ ॥
मुद्रा ब्रह्माञ्जलिर्नाम देवसान्निध्यकारिणी ।
अनया बद्धया चैव नित्यं तुष्यन्ति देवताः ॥ ५ ॥
तस्मात् तु सर्वदेवानां मुद्रामेनां प्रदर्शयेत् ।
सम्मुखौ प्रसृतौ कृत्वा[2] किञ्चिदाकुञ्चिताङ्गुली ॥ ६ ॥
अङ्गुष्ठाभ्यां लिखेदन्तर्मुद्रैषावाहिनी स्मृता ।
कृत्वा नताङ्गुली हस्तावूर्ध्वाङ्गुष्ठौ तु चालयेत् ॥ ७ ॥
सान्निध्यमुद्रिका ज्ञेया न्यस्तवत् स्थापनी भवेत् ।
उभावन्तर्गताङ्गुष्ठौ मुष्टी[3] कुर्यान्निरोधिनी[4] ॥ ८ ॥
संहतौ तु करौ कृत्वा मध्येऽङ्गुष्ठौ निपीडयेत् ।
प्रसार्य चाङ्गुलीः सर्वा मुद्रेयं परमेष्ठिनः ॥ ९ ॥
एकैकस्य क्रमादन्या अङ्गुलीश्च नियोजयेत् ।
पुरुषादिक्रमेणैव सर्वमुद्राः प्रकल्पयेत् ॥ १० ॥
सप्तजन्मकृतं पापं यच्च पातकपञ्चकम् ।
मुद्रापञ्चकविज्ञानान्नश्यत्येव न संशयः ॥ ११ ॥
वामहस्तेन मुष्टिं तु कृत्वाङ्गुष्ठं समुच्छ्रितम् ।
हृदि संयोजयेदेतां गृहीत्वेतरमुष्टिना ॥ १२ ॥

---

१. 'सव्यस्य', २. 'हस्तौ कि' ३. 'ष्टिं', ४. 'धनीम्', ख. ग. पाठः.

योनिमुद्रा त्वियं प्रोक्ता वैष्णवी भुक्तिमुक्तिदा ।
दर्शयेद् देवदेवस्य बद्ध्वा पद्मासनं पुरः ॥ १३ ॥
दृष्ट्वैवं[1] दर्शितां सद्यः प्रणामं यान्ति देवताः ।
यक्षविद्याधराद्याश्च भ्रमन्ति भयमोहिताः ॥ १४ ॥
वामहस्तमथोत्तानं कृत्वोत्तानं च दक्षिणम् ।
संश्लिष्य भ्रामयेत् पश्चाद् ग्रथित्वा चाङ्गुलीः क्रमात् ॥
कोटिमुद्रा त्वियं प्रोक्ता देवदेवस्य च प्रिया ।
अनामामध्ययोर्मध्ये निवेश्याङ्गुष्ठमायतम् ॥ १६ ॥
दक्षिणस्य तु हस्तस्य मुद्रेयं हृदये स्मृता ।
निर्वर्त्य मुष्टिमाहन्यादङ्गुष्ठाग्रेण तर्जनीम् ॥ १७ ॥
स्थापयेत् तु ललाटान्ते मुद्रेयं शिरसि स्मृता ।
वर्तयित्वा दृढां मुष्टिं कुर्यादङ्गुष्ठमूर्ध्वगम् ॥ १८ ॥
स्थापयेत् तां शिखादेशे शिखामुद्रा प्रकीर्तिता ।
संप्रवेश्यान्तरङ्गुष्ठौ वेष्टयित्वा समन्ततः ॥ १९ ॥
संहरेत् तत्प्रदेशिन्यौ मुद्रेयं कवचे स्मृता ।
अग्रहस्तं परावृत्य बद्ध्वा नाराचमुष्टिवत् ॥ २० ॥
विसृजेत् तिर्यगायम्य मुद्रास्त्रस्येयमीरिता ।
भ्रूमध्ये स्थापयेद् बद्ध्वा शिखामुद्रामधोमुखीम् ॥ २१ ॥
नेत्रमुद्रेयमाख्याता षडेतास्त्वङ्गमुद्रिकाः ।
आत्मरक्षणमेताभिः कर्तव्यं साधकैः सदा ॥ २२ ॥
कृत्वाङ्गुष्ठौ समावूर्ध्वं बद्ध्वा हस्तौ परस्परम् ।
योगसम्पुटमुद्रेयं ध्याने सर्वत्र युज्यते ॥ २३ ॥

१. 'तां' ख. ग. घ. पाठः.

तथैवच्छिद्रवत् कृत्वा कुर्यान्मूर्धन्यधोमुखीम् ।
अभिषेके प्रयोक्तव्या मुद्रेयं पावनी परा ॥ २४ ॥
मणिबन्धसमौ हस्तावूर्ध्वे शाखाः प्रसारिताः ।
अन्तःप्रवेशिताङ्गुष्ठौ पद्ममुद्रासने स्मृता ॥ २५ ॥
मणिबन्धसमौ हस्तौ तिर्यक् सम्भ्राम्य चक्रवत् ।
पर्यायेण प्रयोक्तव्या चक्रमुद्रा महोदया ॥ २६ ॥
मुष्टिं कृत्वा तु हस्ताभ्यामङ्गुष्ठौ विनतावुभौ ।
युक्त्वा सम्भ्राम्य निर्मुक्तौ[१] गदाख्या विघ्ननाशिनी ॥ २७ ॥
निबध्य दक्षिणाङ्गुष्ठं वामहस्तस्थमुष्टिगम् ।
कृत्वा चाङ्गुष्ठतर्जन्यौ संयुक्ते प्रसृते समे ॥ २८ ॥
तिस्रस्तु दक्षिणस्यान्या बध्नीयुर्मुष्टिमूर्ध्वतः ।
शङ्खमुद्रेयमुद्दिष्टा द्रव्याणां स्थापने परा ॥ २९ ॥
धनुषस्तु धनुर्मुष्टिः शरमुष्टिः शरस्य च ।
खड्गस्य कोशविश्लेषो मुद्रा खेटस्य मण्डलम् ॥ ३० ॥
उभे कनिष्ठिके बद्ध्वा प्रदेशिन्यावुभे तथा ।
हस्तावुभौ परावृत्तावङ्गुष्ठौ सहितावधः ॥ ३१ ॥
मध्यमानामिके युक्ते चालयेत् पक्षयुग्मवत् ।
बद्धा गरुडमुद्रेयं[२] वाहनादौ बलावहा ॥ ३२ ॥
विरलोर्ध्वाङ्गुलिं हस्तं कृत्वायामेन दर्शयेत् ।
मुद्रानन्तस्य विज्ञेया शयनादौ प्रयुज्यते ॥ ३३ ॥
कृत्वोत्तानावुभौ हस्तौ सम्पुटाग्रौ प्रसारितौ ।
कुर्वीत प्रार्थनामुद्रां सान्निध्यादिषु सर्वदा ॥ ३४ ॥

१. 'क्ता' ख. ग. घ. पाठः. २. 'र्ली' क. पाठः

श्रीवत्सकौस्तुभार्थः स्याद्वरःस्पर्शौ द्विपार्श्वगः ।
ऊर्ध्वमुद्रां प्रयुञ्ज्यादावुत्तानीकृत्य तां पुनः ॥ ३५ ॥
मुञ्चेद् वामकनिष्ठादिक्रमान्मूर्तिचतुष्टये ।
किञ्चिदाकुञ्चिताग्रास्तु योजयित्वाङ्गुलीः शनैः ॥ ३६ ॥
तर्जन्यौ मध्यमापृष्ठे योजयित्वा विचक्षणः ।
अङ्गुष्ठाभ्यां लिखेदन्तः शक्तीनां योनिसंज्ञिता ॥ ३७ ॥
वामहस्तेन सङ्गृह्य करं तिर्यक्प्रसारितम् ।
संहतं चालयेदेषा ध्वजमुद्रा प्रकीर्तिता ॥ ३८ ॥
मध्यानामान्तरेऽङ्गुष्ठो निर्गतो मध्यमानता ।
दक्षिणस्य तु मुष्टौ स्यान्मुद्रा वैनायकी स्मृता ॥ ३९ ॥
ऊर्ध्वाङ्गुष्ठो भवेन्मुष्टिर्लिङ्गमुद्रा शिवे स्मृता ।
तर्जयेद् वामतर्जन्या नासाग्रासन्नया जगत् ॥ ४० ॥
विष्वक्सेनस्य सा मुद्रा जीर्णोद्धारादिषु स्मृता ।
मानसो रूपसङ्कल्पो मुद्रा मोक्षार्थिनां स्मृता ॥ ४१ ॥
इतरेषां तु हस्ताभ्यां प्रयोगः शस्यते बुधैः ।
नान्यसन्दर्शने मुद्रा नानिमित्तं च बन्धयेत् ॥ ४२ ॥
गुह्यमेतद्धि तन्त्रेषु तस्माद् रहसि योजयेत् ।
मुदं कुर्वन्ति देवानां राक्षसान् द्रावयन्ति च ॥ ४३ ॥
इत्येवं सर्वमुद्राणां मुद्रात्वं तान्त्रिका विदुः ।
पटान्ते बन्धयेन्मुद्रा नचापि कथयेद् बुधः ॥ ४४ ॥
कथनाज्जायते स्रंसस्तस्माद् गोप्याः सदा बुधैः ।
आनन्त्यादखिला मुद्रा वक्तुं ब्रह्मन्! न शक्यते ॥ ४५ ॥

देवतानां बहुत्वाच्च मुद्रोद्देशो[1] मयेरितः ।
प्रणामप्रार्थनाद्यास्तु मुद्राः सर्वादिवौकसाम् ॥ ४६ ॥
अच्युतस्यापि पूजायामज्ञानां कल्पयेदिमाः ।
अलाभे सर्वमुद्राणामञ्जलिर्हृदि मूर्ध्नि वा ॥ ४७ ॥
सामान्यमुद्रा विज्ञेया सर्वेषां च दिवौकसाम् ।
मन्त्रश्च प्रणवो योज्यः सिद्धिरेवं भविष्यति ॥ ४८ ॥
पूर्वं कृत्वा करन्यासं मुद्राबन्धः शुभो भवेत् ।
अन्यथा विफलाः सर्वा भविष्यन्ति न संशयः ॥ ४९ ॥
वृथान्यदर्शने वापि प्रयुक्ता विफलास्तथा ।
कुप्यन्ति देवताश्चास्य सिद्धिमाशु हरन्ति च ॥ ५० ॥
गुप्तं[2] मुद्रागणं यस्तु यथाकालं प्रदर्शयेत् ।
कामाः सर्वेऽस्य सिध्यन्ति प्रीयन्ते चास्य देवताः ॥ ५१ ॥
सामान्याख्या विशेषाख्यास्तथाङ्गाख्याश्च कीर्तिताः ।
तथैव परिवाराख्या मुद्रा ह्येताश्चतुर्विधाः ॥ ५२ ॥
*मध्यमानामिके विद्वानङ्गुष्ठाभ्यां तु पीडयेत् ।
कनिष्ठा तर्जनीयोज्या श्रीवत्सस्य प्रदर्शयेत् ॥ ५३ ॥
अनामा पृष्ठसंलग्ना दक्षिणस्य कनिष्ठिका ।
कनिष्ठया तु सङ्गृह्य तर्जन्यानामिकां तथा ॥ ५४ ॥
गृहीत्वानामिकां मध्यामङ्गुष्ठं चोच्छ्रितं कुरु ।
तस्मिन्नङ्गुष्ठके श्लिष्टा वामहस्तस्य तर्जनी ॥ ५५ ॥

१. 'शान्मयेरिता', २. 'प्त' ख. ग. पाठः

* एतत्पद्यात् पूर्वमेतत्पटलान्तास्थितम् ' एवं चतुर्विधा ........ ' इत्यादिपद्यं पठनीयमिति व्याख्यातः प्रतीयते ।

मध्यमे[1] मध्यमां[2] कृत्वा चाङ्गुष्ठं मणिबन्धने ।
कौस्तुभस्य त्वियं मुद्रा दर्शनीया च साधकैः ॥ ५६ ॥
सम्मुखावुच्छ्रितौ हस्तौ व्योममध्ये विमोचयेत् ।
तर्जन्यङ्गुष्ठकौ श्लिष्य मालामुद्रां प्रदर्शयेत ॥ ५७ ॥
एवं चतुर्विधा मुद्रा गोप्या यत्नेन सर्वदा ।
प्रयोज्याश्च यथाकालं साधकैः सिद्धिकाङ्क्षिभिः ॥ ५८ ॥

इति विष्णुसंहितायां सप्तमः पटलः ॥

---

## अथ अष्टमः पटलः ।

अथ वक्ष्यामि संक्षेपादग्निसंस्कारमुत्तमम् ।
प्राच्यां कुण्डमुदीच्यां वा स्थण्डिलं वाप्य[3]सम्भवे ॥ १ ॥
द्विहस्तमेकहस्तं वा चतुरश्रं त्रिमेखलम् ।
द्विमेखलं वा कुण्डं स्यादेकमेखलमेव वा ॥ २ ॥
एककुण्डस्य मानार्धं खातमन्यत्र[4] तत्समम ।
द्वादशाष्टचतुर्भिः स्यादङ्गुलैर्मेखलोन्नतिः ॥ ३ ॥
सात्त्विकी राजसी चात्र तामसी मेखलाः स्मृताः ।
चतुरङ्गुलविस्ताराः सर्वास्ता हस्तमात्रके ॥ ४ ॥
द्विगुणे द्विगुणा ज्ञेया योनिः पश्चिमतो भवेत् ।
चतुर्दशाङ्गुला पश्चात् तन्नालं चतुरङ्गुलम् ॥ ५[5] ॥
अष्टाङ्गुलं भवेद् वृत्तं निर्वाहस्तु षडङ्गुलः ।
गजोष्ठसदृशोऽश्वत्थपत्राग्राकार एव वा ॥ ६ ॥

१. 'मान्म', २. 'मं', क. पाठः, ३. 'व्या', ४. 'स्य' ख. ग. पाठः. ५. 'णा' क. पाठः.

प्राजापत्या गजोष्ठाग्रा योनिरन्या तु वैष्णवी ।
कुण्डस्था वैष्णवी शक्तिः प्रकृतिस्त्रिगुणात्मिका ॥ ७ ॥
सा योनिः सर्वभूतानां सिद्धीनां च विशेषतः ।
प्राच्यां शिरः समाख्यातं बाहू दक्षिणसौम्ययोः ॥ ८ ॥
उदरं कुण्डमित्युक्तं योनिः पादौ च पश्चिमे ।
पदान्येकोनपञ्चाशत् कुण्डे सप्तविभाजिते ॥ ९ ॥
आदिहान्तां क्रमात् तेषु पदेषु परिकल्पयेत् ।
प्रणवं पूर्वमुद्दिश्य मेखलात्रितयेऽशकान् ॥ १० ॥
व्यापिनं पुरुषं नादं स्मरेद् व्यास्तां च मातृकाम् ।
विसर्गं योनिमध्ये च ध्यात्वाग्नीषोमबिन्दुकम् ॥ ११ ॥
गर्भरूपा तु सा योनिर्मातृकेयं तदुद्भवा ।
पितृमर्त्यसुरांशस्थां प्रादक्षिण्येन पूजयेत् ॥ १२ ॥
हकारं मध्यकोष्ठेऽन्त्यं विष्णुं जीवात्मकं तथा ।
गर्त्ताकारोदरा सेयं प्रकृतिर्गर्भभागिनी ॥ १३ ॥
ज्ञातव्या साधकेनैवं परां सिद्धिमभीप्सता ।
गायत्री कुण्डरूपेयं चतुर्विंशतिधा स्थिता ॥ १४ ॥
तारात्मकः पुमान् विष्णुराधिष्ठातात्र कीर्तितः ।
नाभिगुह्यान्तरं विद्यादग्निस्थानं तु देहिनाम् ॥ १५ ॥
तत्रैवाधीयते गर्भस्तत्र होमश्च सिद्धये ।
चतुर्विंशाङ्गुलं कुण्डं गायत्रीसंख्यया स्मृतम् ॥ १६ ॥
चतुर्विंशतितत्त्वानि द्विहस्ते द्व्यङ्गुलानि तु ।
स्वराः पञ्चदशाधस्ताद् योनिः पञ्चदशाङ्गुला ॥ १७ ॥

षोडशः सविसर्गोऽत्र नाभ्यन्ते संव्यवस्थितः ।
सैव शक्तिः परा विष्णोः परमामृतवाहिनी ॥ १८ ॥
अग्नीषोमात्मिका दिव्या सर्वं ज्ञेयं च तन्मयम् ।
साग्निरूपेण संहारं सोमरूपेण चोदयम् ॥ १९ ॥
करोति बिन्दुयुग्मस्था नित्यमेषा मदिच्छया ।
ब्रह्मलोकं स्थिता भित्त्वा गता मूर्ध्ना ममालयम् ॥ २० ॥
पितृयानं च वामे स्याद् देवयानं च दक्षिणे ।
मध्ये[2]ऽपि ब्रह्मणो मार्गो मुक्तये सैवमीरिता ॥ २१ ॥
साग्निरूपा व्रजत्यूर्ध्वं सोमरूपा व्रजत्यधः ।
वामदक्षिणतो हित्वा स्थिता व्याप्य जगत्त्रयम् ॥ २२ ॥
इडा च पिङ्गला नाड्यौ वामदक्षिणपार्श्वयोः ।
सुषुम्नोर्ध्वगता नाडी मोक्षमार्गस्तु स स्मृतः ॥ २३ ॥
तत्र चित्तं समाधाय धर्माधर्मविवर्जितम् ।
सर्वरोगविनिर्मुक्तो लयमायात्यसंशयम् ॥ २४ ॥
एवं कुण्डशरीरं तु ज्ञातव्यं मातृकामयम् ।
लीयते विश्वमत्रेति कुण्डं तद्विश्वकुण्डनात् ॥ २५ ॥
तस्मात् कुण्डेऽत्र होतव्यं विधिदृष्टेन वर्त्मना ।
सुसंस्कृते यथा क्षेत्रे फलं प्राप्नोति कर्षकः ॥ २६ ॥
हुतभुक् च तथा ज्ञेयः संस्कृतः फलदो नृणाम् ।
यथैवाज्यस्य संस्कारः कर्तव्योऽग्नेस्तथैव च[3] ॥ २७ ॥
होतव्यं संस्कृते तस्मादग्नौ नासंस्कृते बुधैः ।
शिष्यस्यैव तु संस्कारो वह्नेराज्यस्य वात्र यः ॥ २८ ॥

---

१. 'अ' घ. पाठः. २. 'ध्ये च ब्र' क. घ. पाठः. ३. 'सः' ख. ग. घ. पाठः.

नाग्न्यर्थस्तत्त्वतस्तस्मादिष्टो यागेषु सर्वथा ।
मथितं मणिजं वाथ श्रोत्रियागारजं तु वा ॥ २९ ॥
शरावेणाग्निमानीय तमस्त्रेण तु शोधयेत् ।
संहारमुद्रया तस्य जीवमात्मनि योजयेत् ॥ ३० ॥
शय्यां तु चिन्तयित्वादौ धर्माधर्मादिसंयुताम् ।
वरास्तरणसंछन्नां धूपामोदाधिवासिताम् ॥ ३१ ॥
सुगन्धकुसुमाकीर्णां नानाद्रव्यैश्च शोभिताम् ।
ध्यायेल्लक्ष्मीं च वाग्रूपां भूषितां नवयौवनाम् ॥ ३२ ॥
साभिलाषामृतुस्नातां फुल्लपङ्कजधारिणीम् ।
एवं च चिन्तयेत् सौम्यं सदा प्रहसिताननम् ॥ ३३ ॥
रत्यर्थिनं समासक्तदृष्टिं देवीमुखाम्बुजे ।
एवंरूपावुभौ ध्यात्वा गन्धपुष्पैः प्रपूजयेत् ॥ ३४ ॥
देवस्य शुक्लमध्यस्थमग्निबीजं तु चिन्तयेत् ।
गर्भाशयप्रविष्टं तु तद्रक्तेन समन्वितम् ॥ ३५ ॥
देवं विसर्जयेत् पश्चाद् गर्भाधाने कृते तथा ।
कुण्डभूतां ततो देवीं वह्निभूतं च तं स्मरेत् ॥ ३६ ॥
तत्पुंसवनसीमन्तजातनामाशनक्रियाः ।
हृदयादिभिरष्टाष्ट हुत्वाज्यं कल्पयेत् क्रमात् ॥ ३७ ॥
वौषडन्तेन मन्त्रेण प्लुतान्तेन यथाविधि ।
पृथक् पूर्णाहुतिं दद्याद् गन्धपुष्पैश्च पूजयेत् ॥ ३८ ॥
प्रणवस्तु स्रुवो ज्ञेयो मातृका स्रुगिति द्वयम् ।
पुरुषप्रकृतित्वेन विज्ञातव्यं विचक्षणैः ॥ ३९ ॥

१. 'घ्यादि चि', २. 'वि', ३. 'सति ।' ख. ग. पाठः. ४. 'दं' ख. पाठः.

रत्निमात्रं[1] स्रुवं कुर्याद् वर्तुलं द्व्यङ्गुलं मुखम् ।
गोष्पदं तु यथा मग्नमल्पपङ्के तथा भवेत् ॥ ४० ॥
वर्तुलानन्तरग्रन्थिर्विष्कम्भेणाङ्गुलो भवेत् ।
दण्डै[2]स्तु वर्तुलाकारो ग्रन्थिवक्रादिवर्जितः ॥ ४१ ॥
क्रमात् तनूकृताग्रोऽधो नाडी स्याच्चतुरङ्गुला ।
स्वयं निपतितः शुष्को दग्धो भग्नश्च दन्तिना ॥ ४२ ॥
दुष्टदेशे[3]भवो वक्रः स्फुटितश्च सकोटरः ।
सक्षतः कृमिजुष्टोऽन्यवृक्षजश्चान्यतोमुखः ॥ ४३ ॥
स्रुवः स्यादभिचाराय स्रुग्वा तस्मान्न कारयेत् ।
क्षीरवृक्षोद्भवः शान्त्यै खादिरः सर्वकामदः ॥ ४४ ॥
ब्रह्मवर्चसकृद् ब्राह्मो जुहूर्ब्राह्मी सदा भवेत् ।
ऋग्वेदाद्यास्त्रयो वेदा ब्रह्माद्याश्चैव देवताः ॥ ४५ ॥
भूरादयोऽग्नयोऽवस्थाः सवनान्यक्षराणि च ।
प्रणवांशक्रमाद्दण्डग्रन्थिवृत्तेषु कल्पयेत् ॥ ४६ ॥
बाहुमात्रां स्रुचं सप्तषट्पञ्चाङ्गुलविस्तराम् ।
कारयेन्मध्यतो वृत्तं त्रिभागेन च खातयेत् ॥ ४७ ॥
तिर्यगूर्ध्वं समं तस्य बहिरर्धं तु शोधयेत् ।
अङ्गुलस्य चतुर्थांशं शेषार्धेऽर्धं तथान्ततः ॥ ४८ ॥
खातस्य मेखलां रम्यां शेषार्धेन तु कारयेत् ।
कलाध्यर्धाङ्गुलायामं कण्ठं त्र्यंशैकविस्तृ[9]तम् ॥ ४९ ॥

---

१. 'त्रः स्रुवः कार्यो' ख. ग. पाठः. २. 'ण्डोऽस्य वर्तुलः कार्यो म', ३. 'ओद्भवो', ४. 'न्यो', ५. 'मा', ६. 'वक्रेषु', ७. 'गर्ते', ८. 'त्तु', ९. 'स्तरम्' ख. ग. पाठः.

चतुरङ्गुलविस्तारं मुखं पञ्चाङ्गुलं तथा ।
समायामं तु कर्तव्यं [1]शुभं हंसमुखाकृति ॥ ५० ॥
[2]धाराकुल्या च तन्मध्ये वृत्तगर्तप्रवेशिनी ।
कण्ठे कनीयसी नाहं सुषिरं तस्य कल्पयेत् ॥ ५१ ॥
धारा स्यात्तदधोभागे दण्डमूले च युक्तितः ।
शेषं दण्डं सुवृत्तं च क्रमेणाग्रं तनूकृतम् ॥ ५२ ॥
प्रादक्षिण्याद् बिलस्यान्तर्न्यस्तव्याः षोडश स्वराः ।
दण्डेऽन्ये कोणतोऽन्तःस्था बिलपार्श्वाग्रगाः परे ॥ ५३ ॥
तया पूर्णात्र दातव्या स्रुवसम्पुटगुप्तया ।
स्रुवेण केवलेनापि होमस्तत्सहितेन च ॥ ५४ ॥
स्रुचा [3]नो स्रुवया तारः केवलोऽपि हि सिद्धिदः ।
सृष्ट्यर्थोऽयं स्रुवस्तस्मात् तेनासीनस्तु होमयेत् ॥ ५५ ॥
स्थित्यर्थं स्रुक् तया पूर्णा तिष्ठन्नेव तु दापयेत् ।
गायत्री तु जुहूर्ब्राह्मी स्याच्चतुर्विंशदङ्गुला ॥ ५६ ॥
दण्डाग्रेऽस्यां मुखाग्रेऽन्तर्गण्डयोराज्यवर्त्मनि ।
हृदयादीनि नेत्रान्तान्यङ्गानि परिकल्पयेत् ॥ ५७ ॥
तारोपस्तीर्णया नित्यं तया पक्वं तु होमयेत् ।
प्राणापानस्वरूपौ च स्रुक्स्रुवौ कथितावुभौ ॥ ५८ ॥
कर्तव्यौ नाभिसंलग्नौ प्राणस्थानं तु तद्विदुः ।
धूमस्तु नासिका ज्ञेया पार्श्वयोः कर्णचक्षुषी ॥ ५९ ॥
पूर्वापरं ललाटास्यं वह्निस्थानमिदं भवेत् ।
कृत्वोल्लेखादि गायत्र्या परिधायार्चितेऽनले ॥ ६० ॥

१. 'मुखं हं' ख. ग. पाठः. २. 'कार्यकु' क घ पाठः. ३. 'ना' ख. ग. पाठः

पूर्ववत् पङ्कजं ध्यात्वा सर्वतत्त्वान्यनुक्रमात् ।
मध्ये जनार्दनं ध्यायेत् सूर्यकोटिसमप्रभम् ॥ ६१ ॥
आहुतीनां सहस्रेण तर्पयेत् तं शतेन वा ।
दश पूर्णाहुतीस्तत्र मूलमन्त्रेण होमयेत् ॥ ६२ ॥
दशांशेनेतरांश्चैव तर्पयेच्चरुणैव वा ।
नैत्यकेतुविधिर्ह्येष कर्तव्यो दीक्षितैर्द्विजैः ॥ ६३ ॥
शोषदाहामृतप्लावकाठिन्यपरिकल्पनैः ।
तत्तद्बीजकृतैः शोध्यं वह्नेरायतनं सदा ॥ ६४ ॥
यत्परिस्तीर्यते दर्भैर्यत्प्रणीता निधीयते ।
यद्ब्रह्मा कल्प्यते चात्र सर्वं तद्विघ्नशान्तये ॥ ६५ ॥
स्निग्धे प्रदक्षिणावर्ते सुसमिद्धे हुताशने ।
विधूमे लेलिहाने च होतव्यं कर्मसिद्धये ॥ ६६ ॥
अल्पतेजाश्च रूक्षश्च शुक्लः कृष्णश्च योऽनलः ।
भूलेही विष्फुलिङ्गी च दुर्गन्धश्च न शस्यते ॥ ६७ ॥
रूपादिभेदतः काली कराली च मनोजवा ।
लोहिता चाधधूम्रा च ज्वाला चाथ स्फुलिङ्गिनी ॥
विश्वरूपेति सप्तैता जिह्वा ज्ञेया हविर्भुजः ।
ताभिरस्य मुखं पूर्णं विदीर्णं सप्तजिह्वकम् ॥ ६९ ॥
लेलिह्यमानमुज्ज्वालं सदा ध्येयं जुहूषता ।
कर्षार्धं जुहुयादाज्यमन्नं ग्रासार्धमात्रकम् ॥ ७० ॥
शुक्तिमात्राहुतिर्दध्नः क्षीरस्य मधुनस्तथा ।
यवतण्डुलशालीनां प्रसृतिः पृथुकस्य च ॥ ७१ ॥

---

१. 'काम्यासि', २. 'साप्तजिह्वकम्' ख. ग. पाठः.

लाजानां मुष्टिमात्रं तु फलानां स्वप्रमाणतः ।
भक्ष्याणामभयामात्रं मूलानां खण्डनत्रयम् ॥ ७२ ॥
दूर्वाणां च त्रयं साग्रं सक्तूनां कर्षमात्रकम् ।
तिलानां सर्षपाणां च मुद्गानां चैव पञ्चकम् ॥ ७३ ॥
एकैकं[1] चैव होतव्यं पुष्पाणां समिधां तथा ।
चतुर्गृहीतमापूर्य स्रुवेणाज्यं महास्रुचा ॥ ७४ ॥
पुर्णाहुतिस्तु दातव्या नित्यमच्छिन्नधारया ।
अरत्निमात्रमिध्माख्यं समित्पूगं घृताप्लुतम् ॥ ७५ ॥
पालाशं युगपन्नित्यं होतव्यमविकम्पितम्[2] ।
स्रुवेणाज्यमुपस्तीर्य जुह्वां पिण्डद्वयं चरोः ॥ ७६ ॥
घृताभिघारितं पक्वं यत्[3] साद्यन्तस्रुवाहुति ।
एवमेकैकपिण्डं तु पुनर्द्विरभिघारितम् ॥ ७७ ॥
प्रधानाहुतिहोमान्ते होतव्यं स्विष्टकृद् भवेत् ।
अन्यत् सर्वं घृताभ्यक्तं दक्षिणस्य करस्य तु ॥ ७८ ॥
जुहुयाद्देवतीर्थेन कनिष्ठामूलवर्तिना ।
स्रुवेणैव द्रवद्रव्यं दधिक्षीरादि सर्वदा ॥ ७९ ॥
होतव्यं विधिना सर्वमन्यथा दोषमाप्नुयात् ।
पूर्वं त्रिः क्षालितैः शालितण्डुलैरमलैश्चरुम् ॥ ८० ॥
यन्त्रेणाग्नावधिश्रित्य श्रपयेद् व्यजनानिलैः ।
संस्कृत्य विधिना चाज्यं दर्भैः सम्मृज्य च स्रुवम् ॥
निधाय परिधीनद्भिः परिषिच्याग्निमर्चयेत् ।
इध्माघाराज्यभागेषु हुतेष्वाहूय देवताम् ॥ ८२ ॥

---

१. 'कमेव', २. 'लिप' ख. ग. पाठः. ३. 'दाद्य' क. घ. पाठः.

पक्वमन्यच्च होतव्यं समिदादि यथाक्रमम् ।
आघारवत् क्रमो ह्येष कर्तव्यः सिद्धिमीप्सता ॥ ८३ ॥

आधायाग्निं परिस्तीर्य संस्कृत्याभ्यर्च्य च क्रमात् ।
होतव्यमखिलैर्द्रव्यैरयमापूर्विको विधिः ॥ ८४ ॥

होमशेषं समाप्याथ विधिनोद्वास्य देवताम् ।
स्वशक्त्या दक्षिणां दद्यादेवं सिद्ध्यन्ति सिद्धयः ॥

सामान्येन समाख्यातमग्निकार्यमिदं मया ।
विशेषतस्तु कर्तव्यं तत्र तत्रैव वक्ष्यते ॥ ८६ ॥

इति विष्णुसंहितायामग्निकार्योऽष्टमः पटलः ॥[1]

---

## अथ नवमः पटलः ।

अथ वक्ष्यामि संक्षेपान्मण्डलं सार्वकामिकम् ।
यद् ज्ञात्वा मुनयः सम्यक् परां सिद्धिमितो गताः ॥

यागभूमिं परीक्ष्यादौ सर्वदोषविवर्जिताम् ।
शल्यैर्विमोचितां यत्नात् समां पूर्वोत्तरप्लवाम् ॥ २ ॥

शोधयित्वा यथान्यायं मण्डपं तत्र कारयेत् ।
चतुरश्रं चतुर्द्वारमेकद्वारमथापि वा ॥ ३ ॥

तोरणध्वजसंयुक्तं वितानादिविभूषितम् ।
समङ्गलाङ्कुरादर्शलाजकुम्भाष्टमङ्गलम् ॥ ४ ॥

अग्न्यायतनसंयुक्तमादर्शसमवेदिकम् ।
संस्कृत्य मार्जनालेपगव्यगन्धाक्षतादिभिः ॥ ५ ॥

---

१. इत्यग्निकार्यपटलोऽष्टमः ख. ग. पाठः.

सूत्रपातं ततः कुर्यात् दिग्विभागानुरूपतः ।
प्राक्पश्चिमायते सूत्रे मध्याङ्कोभयपार्श्वगौ ॥ ६ ॥
कृत्वाङ्कौ लाञ्छयेत् ताभ्यां मत्स्यौ दक्षिणसौम्ययोः ।
तयोश्च सूत्रमास्फाल्य लाञ्छयेद् दिक्षु मानतः ॥ ७ ॥
द्वाभ्यां द्वाभ्यामथाङ्काभ्यां लाञ्छयेत् कोणमत्स्यकान् ।
बाहुसूत्राणि चास्फाल्य चतुरश्रं प्रसाधयेत् ॥ ८ ॥
समं षोडशधा भङ्क्त्वा सूत्राण्यास्फाल्य भद्रकम् ।
आलिखेन्मण्डलं तत्र चतुरश्रं सुशोभनम् ॥ ९ ॥
पञ्चवर्णैश्चतुर्द्वारं सिताब्जं तत् सपीठकम् ।
चतुर्भिर्नवकैः पद्मं पीठं पङ्क्त्यैकया बहिः ॥ १० ॥
द्वाभ्यां वीथीं तथा द्वाराण्यब्जस्थानं तु वर्तयेत् ।
तदर्धे द्वादशांशोने चतुर्धावर्तितेंऽशकैः ॥ ११ ॥
पृथिव्यादीनि तत्त्वानि कर्णिकादिषु कल्पयेत् ।
कर्णिकां केसरान् सन्धीन् दलान्यग्राणि च क्रमात् ॥१२॥
कोणसूत्रं समास्फाल्य कुर्यादष्टदलं यथा ।
क्षिप्तेषु सन्धिसूत्रेषु दलसन्ध्यन्तरेण तु ॥ १३ ॥
दलान्यग्राणि मानेन पार्श्वस्थेन च वर्तयेत् ।
पीठे त्रिभिश्चतुर्भिश्च पादगात्राणि कल्पयेत् ॥ १४ ॥
द्वाऽन्तर्बहिश्च[1] चत्वारि द्वारे द्वारे तु मार्जयेत् ।
त्रीण्येकं चैव शोभार्थमुपशोभार्थमन्यथा ॥ १५ ॥
षड्भिः कोणं लतापत्रवितानैर्वीथिरुज्ज्वला ।
एकहस्तं द्विहस्तं च चतुर्हस्तं च भद्रकम् ॥ १६ ॥

---

१. 'श्चत्वारि बाह्यानि द्वा' क. घ. पाठः.

ततोऽधिकं तु चक्राब्जमष्टहस्तान्तमिष्यते ।
द्वादशारत्निका वेदिर्दशाष्टारत्निरेव वा ॥ १७ ॥
तस्या द्वादशभागेन मध्यतोऽक्षं प्रकल्पयेत् ।
नाभिं च तावतीं क्षेत्रमराणां द्विगुणं बहिः ॥ १८ ॥
नाभिवर्न्नेमिवीथ्योश्च क्रमात् क्षेत्राणि कल्पयेत् ।
अक्षभूमिं त्रिधा कृत्वा कर्णिकादि यथाक्रमम् ॥ १९ ॥
वर्तयेन्नाभिसंस्थानि दलान्यग्राणि कल्पयेत् ।
त्रिनाभि द्वादशारं तच्चक्राब्जं शुभवीथिकम् ॥ २० ॥
कल्पयेद् विदिशोऽरस्था दिशोऽरान्तरगोचराः ।
तुल्यमेवोभयोर्मानं सर्वत्र परिकल्पयेत् ॥ २१ ॥
अरं द्वादशधा कृत्वा सूत्राण्यूर्ध्वगतानि च ।
मूलाग्रयोरराः स्थूला वृत्तरूपाश्च मध्यतः ॥ २२ ॥
पिपीलिकोदराः कार्या विपरीता यवोदराः ।
नेमिक्षेत्रं द्विधा कृत्वा प्रथयश्चाधरोत्तराः ॥ २३ ॥
चतुर्विंशतिधा कार्यास्ते चाराग्रान्यसन्धयः ।
बहिरावरणं चात्र नेमिमानेन कल्पयेत् ॥ २४ ॥
तत्र स्थानानि कल्प्यानि दिक्पालानां यथाक्रमम् ।
चतुरश्राणि सर्वाणि तालमात्राणि कल्पयेत् ॥ २५ ॥
बहिर्द्वारादि कर्तव्यं चतुरश्रं यथोदितम् ।
एवं मण्डलमालिख्य रजोभिः पूरयेत् क्रमात् ॥ २६ ॥
सितरक्तासितापीतश्यामैरेवात्र पञ्चभिः ।
सर्वत्र कर्णिका पीता सितान्यब्जदलानि च ॥ २७ ॥

१. 'कुर्यादरा' ख. पाठः. २. 'स्ताश्चारा', ३. 'त् सितरक्तासितापीत' ख. ग. पाठः

पृथुलारुणमध्यानि पीतान्येव यथाक्रमम् ।
केसराण्यच्छबिन्द्वग्राण्युज्ज्वलानि प्रकल्पयेत् ॥ २८ ॥
दलान्तराणि श्यामानि व्योमबाह्येऽश्रयोऽरुणाः ।[1]
सिता धर्मादयः श्यामास्तथाधर्मादयः स्मृताः ॥ २९ ॥
द्वाराणि तु सितान्येव चतुर्दिक्षु प्रकल्पयेत् ।
उत्तरादीनि सर्वाणि विप्रादीनां यथाक्रमम् ॥ ३० ॥
शोभा रक्तोपशोभा तु पीता नीलं च कोणकम् ।
भद्रकेऽन्यद्यथाशोभं सर्ववर्णैस्तु कल्पयेत् ॥ ३१ ॥
चक्राब्जेऽपि तथा पद्मं त्रिधा नाभिमथालिखेत् ।
सितरक्तासितैः पीताः सर्वेऽराः सितसन्धयः ॥ ३२ ॥
प्रथयः शुक्लकृष्णाः स्युर्व्यत्ययात् पीतसन्धयः ।
नानावर्णानि कार्याणि दिक्पानां स्वस्तिकानि तु ॥ ३३ ॥
[2]पीताच्छपाटलश्यामकृष्णरेखास्तु तद्बहिः ।
सितरक्तासितास्तिस्रो भद्रके विहिताः क्रमात् ॥ ३४ ॥
द्वारादि भद्रके यत्तत्[3] चक्राब्जेऽपि बहिस्तथा ।
कल्पनीयं प्रयत्नेन दीक्षायां देशिकोत्तमैः ॥ ३५ ॥
येन रूपेण यल्लेख्यं विधिवच्चक्रमण्डले[4]म् ।
तद्वर्णेनैव रजसा तत्तत्[5]पूरणमत्र तु ॥ ३६ ॥
रत्नैरोषधिभिर्लोहैर्गन्धैर्बीजैश्च धातुभिः ।
पत्रैश्च याज्ञिकैर्वृक्षै[6] रजांस्येतानि कल्पयेत् ॥ ३७ ॥
मुक्त्यै न्यासोऽपसव्येन देवतीर्थेन तु श्रियै ।
सर्वकामसमृद्ध्यर्थं कर्तव्योऽङ्गुलिभिस्तु सः ॥ ३८ ॥

---

१. 'ह्या', २. 'शुक्लपीतारुणश्या', ३. 'द्व', ४. 'ले', ५. 'स्य पू', ६. 'र्विद्वान् र' ख. ग. पाठः.

ग्रन्थिवक्रकृशस्थूलनिम्नोन्नतविमिश्रणैः ।
छिद्रैश्च बहवो दोषा रेखाच्छेदो न सर्वथा ॥ ३९ ॥
प्रमादाद्यत्र शिष्याणां मण्डलस्य तु लेखने ।
ग्रन्थ्यादि स्यादतन्द्री तु[1] समये कुशलो गुरुः ॥ ४० ॥
कर्णिकाकेसरादीनि ललितानि प्रयोजयेत् ।
सकृदर्पणमात्रेण न पुनः परिवर्तनैः ॥ ४१ ॥
कर्णिकामुच्छ्रितां कुर्यात् पत्ररेखाश्च सर्वतः ।
कनिष्ठामध्यमाङ्गुष्ठमिता रेखास्त्रिधोच्छ्रिताः ॥ ४२ ॥
मुख्ये मध्येऽधमेऽब्जादिक्रमाद्दूह्यश्च तत्क्षयः ।
तन्मध्येषु रजोन्यासस्तत्तत्पादोच्छ्रितो भवेत् ॥ ४३ ॥
ग्रन्थ्यादिपरिहारेण प्रयत्नाद् देशिकोत्तमः ।
सर्वत्र समरूपाणि रजांसि विकिरेत् क्रमात् ॥ ४४ ॥
कुड्ये पटे च तच्चक्रं लिखितं मानयोगतः ।
पूजनीयं गृहे नित्यं क्षुद्रभूतादिशान्तये ॥ ४५ ॥
काले स्वयं तु सम्पश्येन्न तत् साधारणो जनः ।
तस्यानुध्यानमात्रेण सर्वमेनो विशीर्यते[2] ॥ ४६ ॥
तस्यान्तिके न तिष्ठन्ति वेताला ब्रह्मराक्षसाः ।
इदं चक्रमुपारूढो विष्णुः सर्वजगत्प्रभुः ॥ ४७ ॥
पूज्यो भक्तैः प्रयत्नेन सदा सर्वार्थसिद्धये ।
असम्भवे द्विहस्तादिमानेनाप्यर्चनादिषु ॥ ४८ ॥
चक्राब्जं वर्तयेद्[3]विद्वानल्पं नानल्पसम्भवे ।
असम्भवेऽपि स्थानानि नेम्यन्तानि न हापयेत् ॥ ४९ ॥

---

१. 'तत् सन्धयेन् कु', २. 'नश्यते', ३. 'कल्पये' क. ष. पाठः.

बहिरावरणं त्वल्पे कल्पनीयं यथेप्सितम्[1] ।
वर्णाः सितारुणाः पीताः कृष्णाः शान्त्यादिदेवताः ॥
योज्या युगेषु वेदेषु वर्णेषु च यथाक्रमम् ।
युगान्तरानुलोमाङ्गरूपं श्यामं तु पञ्चमम् ॥ ५१ ॥
पञ्चवर्णमयं विश्वं तन्मात्रा मूर्तिभेदतः ।
विषयेन्द्रियभेदाच्च पञ्चधेदमवस्थितम् ॥ ५२ ॥
नादरूपेण विज्ञेयं व्याप्तमाद्यक्षरेण तु ।
वर्णादिकल्पनातीतं तद्विष्णोः परमं पदम् ॥ ५३ ॥
व्यापिनी तु परा शक्तिररूपा सर्वतोमुखी ।
अविमुक्तस्तया देवो द्रष्टव्यः साधकैः सदा ॥ ५४ ॥
अवर्णा सा समाख्याता सर्ववर्णा च साधकैः ।
तद्बीजं सा परा माया प्रकृतिः सा गुणात्मिका ॥ ५५ ॥
एकैव सा परा सूक्ष्मा गुणभेदात् त्रिधा भवेत् ।
तद्भेदाद्देवभेदोऽपि ब्रह्मोपेन्द्रहरात्मकः ॥ ५६ ॥
पञ्चधा सा भवेत् पश्चाद् यथा पूर्वं मयोदितम् ।
तद्भेदानुविधायित्वं देवस्य श्रुतिदर्शनात् ॥ ५७ ॥
कल्पितं मुनिभिर्भेदास्त्वसंख्येया[2] गुणोद्भवाः ।
पुरुषं मण्डलं विद्यात् पद्मं हृदयमस्य तु ॥ ५८ ॥
बाह्वन्तरगतं मध्यं नाभिमूलेऽब्जनालकम् ।
पदे द्वे पश्चिमद्वारे ज्ञातव्ये दक्षिणोत्तरे ॥ ५९ ॥
पद्मनालं नवच्छिद्रं विमलादिकलाश्रयम् ।
तस्य मूलं भवेत् सूक्ष्मो बीजरूपो जनार्दनः ॥

१. 'थोचित' ग. पाठः. २. 'र्दैवास्त्व' क. पाठः.

आधारभूतं[1] सर्वस्य महिम्नि स्वे व्यवस्थितम्[2] ।
पद्ममूलं विजानीयाद्यतोऽकारादयोऽभवन् ॥ ६१ ॥
मेरुतः[3] कण्टका नाले ग्रन्थिर्गुणमयो महान् ।
बुद्धिभेदा दलान्यष्टौ धर्माधर्मादयस्ततः ॥ ६२ ॥
नालान्तेऽहंकृतोऽनन्तस्तन्मात्रेन्द्रियभूतभृत् ।
पद्मोऽव्यक्तमकारादिभेदोऽर्केन्द्वग्निमण्डलम् ॥ ६३ ॥
बुद्धिर्गर्वमनोमात्रा दक्षिणादिदलाष्टकम् ।
इत्यन्ये विमलाद्यष्टशक्तिजं चापरे विदुः ॥ ६४ ॥
अण्डमध्यगतं पद्मं विश्वस्यायतनं महत् ।
मायाण्डा[4]धः कपालस्था विद्या चोर्ध्वं व्यवस्थिता[5] ॥ ६५ ॥
पुरीततं हृदब्जस्य कल्पयेत् प्रतिवारणम् ।
तद्बाह्यं[6]तः पुराकारो वैराजो देव उच्यते ॥ ६६ ॥
पीताच्छारुणकृष्णेषु श्यामे च क्ष्मादयः स्थिताः ।
वसवोऽब्जदलाग्रस्था रुद्रादित्याश्च केसराः ॥ ६७ ॥
मरुतो दलसन्धिस्था रेणवो ग्रहतारकाः ।
दलान्तराग्ररेखासु सरितः सागरास्तथा ॥ ६८ ॥
मेरुस्तु कर्णिकान्तस्थो बीजेषु मुनयः स्थिताः ।
सूर्येन्द्वग्निगतो विष्णुस्तानतीत्य स्थितस्त्विषा ॥ ६९ ॥
तत्स्व[9]रूपं परं नित्यं[10] यः पश्यति स पश्यति ।
आत्मानमन्तरात्मानं परमात्मानमित्यपि[11] ॥ ७० ॥

---

१. 'तः', २. 'तः' क. पाठः. ३. 'मा' ख. पाठः. ४. 'चा', ५. 'तम्', ६. 'ह्ये तत्पुरा', ७. 'इष्यते' क. घ. पाठः. ८. 'स्तथा', ९. 'स्य रू', १०. 'दिव्यं यः', ११. 'मस्यति' ख. ग. पाठः.

तस्य तुर्यं परं रूपं यः पश्यति स एव सः ।
यक्षाद्याः कण्टका[1] नाले रोमाण्यप्सरसः स्मृताः ॥ ७१ ॥
सूत्रं प्रजापतिः पत्रमूले प्राणादिवायवः ।
चक्रमण्डलमध्यस्थ आत्मा सर्वेश्वरो हरिः ॥ ७२ ॥
निष्कलस्तु समाख्यातः परमे व्योम्नि संस्थितः ।
एवं यो वेत्ति देवं तं मण्डलान्तर्गतं तथा ॥ ७३ ॥
स हित्वा वैष्णवीं मायामाप्नुयात् परमं पदम् ।
अविधानेऽपि[2] यो देवं मण्डलान्तःस्थितं यजेत् ॥ ७४ ॥
पश्येद् वा तेन देवेशः साक्षाद् दृष्टो भवेद् ध्रुवम् ।
मण्डलेऽत्र भवेन्नित्यं सान्निध्यं सर्वरूपिणः ॥ ७५ ॥
तस्मात् तीर्थादिपुण्येभ्यो विशिष्टं मण्डले[3]ऽर्चनम् ।

इति[4] विष्णुसंहितायां नवमः पटलः ॥

---

अथ दशमः पटलः ।

अथ वक्ष्यामि संक्षेपाद् दीक्षापूजाद्यनुग्रहम् ।
शिष्याधिकारसिद्ध्यर्थं निर्वाणार्थं च योगिनाम् ॥ १ ॥
दीयन्ते सिद्धयः सर्वाः क्षीयन्ते ग्रन्थयोऽप्यतः ।
दीक्षात्वमेवं दीक्षाया धर्माधर्महृदात्मनः ॥ २ ॥
वसन्तग्रीष्मयोर्दीक्षा कार्या वा कार्त्तिकादिषु ।
शरदाषाढयोश्चोक्ता वर्णजानामनुग्रहः ॥ ३ ॥

---

१. र्णि', २. 'न', ३. 'ला' क. घ. पाठः. ४. 'ति मण्डलपटलो नवमः' ख. ग. पाठः.

जातिशौचगुणान् पूर्वं परीक्ष्य[1] स्वयमादरात् ।
शुद्धान् गुरुर्विजानीयात् स्त्रीशूद्रांस्तु विशेषतः ॥ ४ ॥
ते तु[2] भक्तिं ततो ज्ञात्वा कर्तव्यां परमेश्वरे ।
देववद् भक्तिमन्तोऽस्य कुर्युः शुश्रूषणं चिरम् ॥ ५ ॥
भगवंस्त्वत्प्रसादेन संसारार्णवतारणम् ।
इच्छामश्चैहिकीं सिद्धिं विशेषेण तपोधन ! ॥ ६ ॥
इति विज्ञाप्य सन्तोष्य दानानुगमसान्त्वनैः ।
तदिच्छयोक्तसम्भारानाहरेयुर्यथाबलम् ॥ ७ ॥
द्रव्याण्यानीय[3] संशोध्य पूर्वेद्युरधिवास्य च ।
द्वादश्यां दीक्षयेच्छिष्यानिष्ट्वा देवं विधानतः ॥ ८ ॥
देवालयनदीतीर्थगोष्ठारामादिसन्निधौ ।
ब्राह्मणादिविभागेन यागस्थानं प्रकल्पयेत् ॥ ९ ॥
दीक्षार्थिनस्तु यावन्तः सम्भवन्त्यत्र वैष्णवाः ।
ते सर्वे सममेवात्र यतेरन्नात्मशक्तितः ॥ १० ॥
यत्नोऽर्थो वाधिको यस्य फलं तस्याधिकं तथा ।
वित्तशाठ्यं तु यः कुर्यान्नरके स पतेद् ध्रुवम् ॥ ११ ॥
वैष्णवैरभ्यनुज्ञातो दीक्षितैः कुशलैः सह ।
स्नात्वाचम्य शुचिर्भूत्वा कृतनित्यः स्वलंकृतः ॥ १२ ॥
यागार्थं कल्पितां भूमिमाचार्यः स्वयमाविशेत् ।
सञ्चिन्त्य मनसा देवं सकलं मण्डलात्मकम् ॥ १३ ॥
संस्कृत्य विधिना वेदिं कलशन्यासमारभेत् ।
नृसिंहजप्तान् सिद्धार्थान् फडन्तेन विकीर्य[4] तु ॥ १४ ॥

---

१. 'समीक्ष्य' ख. ग. पाठः. २. 'ऽपि' क. घ. ग. पाठः.
३. 'नीय सं' ख. पाठः. ४. 'प्र' क. घ. पाठः.

मूलेन विकिरान् जप्त्वा पञ्चगव्यं तु साधयेत् ।
गोमूत्रं प्रणवेनैव विसर्गेण तु गोमयम् ॥ १५ ॥
बिन्द्वन्तेन पयो दद्याद् दधि दीर्घेण विष्णुना ।
घृतमाद्येन शुद्धेन विष्णुबीजेन पूजयेत् ॥ १६ ॥
गोमूत्राद् गोमयं त्वर्धं क्षीरमष्टगुणं ततः ।
दधि सप्तगुणं दद्यादाज्यं चैव चतुर्गुणम् ॥ १७ ॥
त्रिबीजेन कुशैः प्रोक्ष्य मूलेन विकिरान् क्षिपेत् ।
त्रिरेव प्राङ्मुखस्तिष्ठंस्तं ध्यात्वोत्तानपाणिना ॥ १८ ॥
पीठन्यासक्रमादीशे कलशं कर्करीयुतम् ।
सरत्नं निर्व्रणं रम्यं-लोहजं सूत्रवेष्टितम् ॥ १९ ॥
पूरयित्वार्चयेद् विद्वान् गन्धपुष्पैर्यथाक्रमम् ।
धर्माधर्मादिपीठस्थं पङ्कजं कलशे न्यसेत् ॥ २० ॥
क्षादिमूर्तिशिफानाळसरःकण्टकरन्ध्रकम् ।
धर्माद्यन्तःस्थयुग्ग्रन्थिसाधर्म्यादिनपुंसकम् ॥ २१ ॥
काद्यैस्त्रिभिस्त्रिभिः पत्रैः कर्णिकान्तैः समन्वितम् ।
विसर्गबिन्दुदीप्ताग्रपूर्वादिस्वरकेसरम् ॥ २२ ॥
तारांशत्रितयोपेतमात्मविद्यापरक्रमात् ।
नादशक्तियुतं मध्ये तत्रावाह्यार्चयेत् प्रभुम् ॥ २३ ॥
वर्धन्यां चासने सिद्धे तस्मादावाहनं भवेत् ।
आज्येऽर्घ्ये च प्रणीतायां स्रुक्स्रुवेषु विशेषतः ॥ २४ ॥
पञ्चगव्ये चरौ कुण्डे मण्डले विष्णुहस्तके ।
पूजयित्वा तथा साङ्गं कलशस्थं तु केशवम् ॥ २५ ॥

१. 'रा' क. ख. पाठः

अग्रतोऽस्त्रेण वर्धन्या मण्डपस्य समन्ततः ।
अच्छिन्नां पातयेद् धारामीशाद्यन्तं प्रदक्षिणम् ॥ २६ ॥
पश्चात् तेनैव मार्गेण साधकः कलशं नयेत् ।
संहृत्य[1] विकिरान् सर्वान् विकीर्णान्[2] पात्रगैः सह ॥ २७ ॥
सर्वधान्यस्थितं कुम्भं पूजयेद् वर्धनीं तथा ।
नवेनांशुकयुग्मेन वेष्टयेत् तं सितेन तु ॥ २८ ॥
घंटिकां[3] च तथैकेन[4] रक्षां चास्त्रेण कल्पयेत् ।
विकिरेदस्त्रजप्तैश्च सर्वधान्यैः समन्ततः ॥ २९ ॥
सम्मृज्य स्थण्डिले देवमर्चयित्वा यथाविधि ।
मूलेन मूर्तिभिश्चाग्नौ संस्कृते श्रपयेच्चरुम् ॥ ३० ॥
क्षालिताज्याक्तसक्षीरामुखामारोप्य तण्डुलान् ।
क्षालितान् समुपस्तीर्णान् न्यस्यालोड्यावघट्य च ॥ ३१ ॥
उपस्तीर्योदगुद्वास्य क्षालितं प्रोक्ष्य पूजयेत् ।
कुर्याद् भस्मोर्ध्वपुण्ड्रं च तत्पार्श्वेऽष्टाक्षरेण तु ॥ ३२ ॥
उपस्तीर्य शुभे पात्रे क्षिप्तं प्रत्यभिघार्य च ।
अभिघार्य क्षतं चाद्यं भागं देवाय कल्पयेत् ॥ ३३ ॥
द्वितीयं कलशस्थाय वह्निस्थाय तृतीयकम् ।
घृताप्लुतं तु मूलेन जुहुयादाहुतित्रयम् ॥ ३४ ॥
तच्छेषेण बलिं दद्यात् पार्षदेभ्योऽष्टदिक्क्रमात् ।
प्रणवेन पुरा पीत्वा पञ्चगव्यं चतुर्थकम् ॥ ३५ ॥
भागं शिष्यैः सहाश्नीयाद् गुरुः कायविशोधनम् ।
सप्ताभिमन्त्रितं प्राच्यां निखातं द्वादशाङ्गुलम् ॥ ३६ ॥

---

१. 'संगृह्य वि', २. 'र्णं' ख. पाठः. ३. 'खण्डिकां', ४. 'थैस्तु
क' क. घ. पाठः.

भक्ष्यं तैर्दन्तकाष्ठं च क्षीरवृक्षजमव्रणम् ।
शुभं परीक्षयेत् तेन शान्तिहोमोऽशुभे स्मृतः ॥ ३७ ॥
आचान्तः सकलो भूत्वा प्रार्थयेद् गुरुरच्युतम् ।
प्रदक्षिणमुपावृत्य नमस्कृत्य प्रसाद्य च ॥ ३८ ॥
संसारार्णवमग्नानां पशूनां पाशमुक्तये ।
त्वमेव शरणं देव! सदा त्वं भक्तवत्सल ॥ ३९ ॥
देवदेवानुजानीहि प्राकृतैः पाशबन्धनैः ।
पाशितान् मोक्षयिष्यामि त्वत्प्रसादात् पशूनिमान् ॥
लब्धानुज्ञस्तु संशोध्य धारणाभिरुपोषितान् ।
अस्त्रेण प्रोक्ष्य लिङ्गस्थान् पशून् स्वात्मनि योजयेत् ॥
सम्प्रोक्ष्य तं पुनर्देहं वाताग्निधूतमग्रतः ।
भस्मकूटमिव ध्यात्वा प्लावयेद् वारिणाखिलम् ॥ ४२ ॥
उदकैकनिधिं सम्यग् ध्यात्वा संसारमण्डलम् ।
कल्पयेत् पार्थिवीं शक्तिं ब्रह्माण्डैकस्वरूपिणीम् ॥ ४३ ॥
तन्मात्रासम्भृतां शुभ्रां वृत्तां बुद्बुदसन्निभाम् ।
लिङ्गे संक्रामिते ध्यायेत् पुरुषं प्रणवात्मकम् ॥ ४४ ॥
विभक्तेन्द्रियसंस्थानं वृद्ध्याब्देनाण्डभेदिनम् ।
शकले रोदसी मध्ये प्रजापतिमिमं स्मरेत् ॥ ४५ ॥
प्रणवेन पुनः प्रोक्ष्य सकलीकृत्य देशिकः ।
स्वहस्ते सकलं ध्यायेन्मण्डलादिकमादरात् ॥ ४६ ॥
चतुर्द्वारं पुरं तच्च ब्रह्मतीर्थाद्यनुक्रमात् ।
मध्ये पद्मं यथाप्रोक्तं पत्राण्यङ्गुलयः स्मृताः ॥ ४७ ॥

१. 'ह्व' ख. पाठः. २. 'त्र' ग. पाठः. ३. 'त्वा म' क. घ. पाठः

कर्णिका तलमध्यं तु पर्वाण्यस्य तु केसराः ।
अग्निस्थानं च मध्येऽत्र तन्मध्ये केशवः स्थितः ॥ ४८ ॥

मण्डलत्रितयस्यान्तः सूर्यकोटिसमप्रभम् ।
तं ध्यात्वा पूजयेन्मध्ये गन्धपुष्पैर्यथाक्रमम् ॥ ४९ ॥

तं हस्तं दापयेन्मूर्ध्नि शिष्यस्य सुसमाहितः ।
हस्ते विष्णुः स्थितो यस्मिन् विष्णुहस्तस्तु स स्मृतः ॥

जन्मान्तरसहस्रैस्तु यत् पापं सञ्चितं पुरा ।
सर्वं तत् स्पर्शमात्रेण विलयं यात्यसंशयम् ॥ ५१ ॥

एवमेकं बहून् वापि जनयेद् ध्यानयोगतः ।
एवं संशुद्धदेहं तं गन्धपुष्पैः प्रपूजयेत् ॥ ५२ ॥

करौ सम्मृज्य मूलेन नेत्रे बद्ध्वा सुवाससा ।
नेत्रमन्त्रेण मेधावी सदशेनाहतेन तु ॥ ५३ ॥

शिष्यं पुष्पाञ्जलिधरं प्राङ्मुखं तु प्रवेशयेत् ।
ब्राह्मणादिक्रमेणैव बहवश्चेद् विचिक्षवः ॥ ५४ ॥

द्वारं तु दक्षिणं श्रेष्ठं मण्डपस्य प्रवेशने ।
उत्तरादीनि चत्वारि विप्रादीनां विशेषतः ॥ ५५ ॥

पुरप्रवेशनं कार्यं शिष्यकामानुरूपतः ।
प्रजाबलार्थसौभाग्यं रत्नान्नविजयस्त्रियः ॥ ५६ ॥

धृतिमोक्षायुरारोग्यं पशुपुत्रसुखादि च ।
पूर्वादिषु प्रवेशे स्यात् करं दत्त्वा प्रवेशयेत् ॥ ५७ ॥

कृतप्रदक्षिणं शिष्यं क्रमाद् वन्दितदिक्पतिम् ।
देवाभिमुखमानीय प्राङ्मुखं स्थापयेत ततः ॥ ५८ ॥

तूष्णीं स गुरुणोद्दिष्टो यतवाक्कायमानसः ।
जानुद्वयेन भूमिं तु विष्टभ्य नतिपूर्वकम् ॥ ५९ ॥
ध्यात्वा देवं हरिं भक्त्या सूर्यकोटिसमप्रभम् ।
लक्ष्म्या समन्वितं सौम्यमष्टबाहुमलङ्कृतम् ॥ ६० ॥
समाहितः क्षिपेन्माल्यं गुर्वादेशप्रतीक्षया ।
तन्नेत्रावरणं मुक्त्वा पुष्पपातं विलोकयेत् ॥ ६१ ॥
पुष्पपातानुरूपेण मूर्तिनाम्ना तमाह्वयेत्[1] ।
अमन्त्रमर्चनं तत्र कारयेद् देवमूर्तिषु ॥ ६२ ॥
देवान्तं ब्राह्मणस्योक्तं वर्मान्तं क्षत्रियस्य तु ।
गुप्तान्तं नाम वैश्यस्य शूद्रे[2] दासान्तमुद्दिशेत्[3] ॥ ६३ ॥
स्त्रीणां देवीति नाम स्यात् सा मूर्तिस्तस्य कामदा ।
दृष्टमात्रे प्रणश्यन्ति मण्डले पापसञ्चयाः ॥ ६४ ॥
धूपं दीपं क्रमाद् दत्त्वा निवेद्यं चात्र कल्पयेत् ।
प्रकृत्यादिपृथिव्यन्तं साधिभूताधिदैवतम् ॥ ६५ ॥
अध्यात्मसंहतं सर्वं क्रमाच्छिष्यतनौ न्यसेत् ।
दक्षिणेनोपवेश्यैनं दर्भपाणिं तु वाग्यतम् ॥ ६६ ॥
अन्वारब्धेन होतव्यमाचार्येण विजानता ।
अग्नौ सम्पातविधिना तत्त्वानां तु शतं शतम् ॥ ६७ ॥
दत्त्वा पूर्णाहुतिं सर्वं कुम्भेशाय निवेदयेत् ।
करणीं कर्तरीं चाथ रजांसि घटिकां तथा ॥ ६८ ॥
यच्चान्यदुपयोगि स्यात् सर्वं तद् वायुगोचरे ।
साङ्गेन मूलमन्त्रेण परामृश्याधिवासयेत् ॥ ६९ ॥

---

१. 'स' क. घ. पाठः. २. 'द्रं' ख. पाठः. ३. 'मिष्यते', 'श्याथ' क. घ. पाठः

ततः शयीत तैः शिष्यैः कुशानास्तीर्य तं स्मरन् ।
दुःस्वप्नादिषु शान्तिः स्यान्नान्यथा सिद्धिरैहिकी ॥ ७० ॥
प्रातः स्नात्वा विसृज्येशं मण्डले पुनरर्चयेत् ।
प्रवालमुक्ताभरणहेमपुष्पैर्मनोहरैः ॥ ७१ ॥
निवेद्यैर्विविधैश्चाग्निं सन्तर्प्याहूय तान् क्रमात् ।
पूर्ववत् कृतदेवार्चानग्रे पद्मासनस्थितान् ॥ ७२ ॥
सम्प्रोक्ष्य सकलीकृत्य विष्णुहस्तेन के स्पृशेत्[1] ।
प्रकृत्यादिपृथिव्यन्तां सृष्टिं ध्यात्वाखिलां क्रमात् ॥
तन्मात्रभूतां तद्देहे जीवेन समतां गताम् ।
तारेणात्मनि संयोज्य ध्यात्वा समरसीकृतम् ॥ ७४ ॥
जीवं तद्देहकालाग्निशक्तियोनिसमर्पणात् ।
गर्भं जन्माधिकारं च भोगं नाशं च पञ्चभिः ॥ ७५ ॥
अष्टाष्टाहुतिभिर्हुत्वा[2] नरके च तथा पुनः ।
पाताले भुवि संशोध्य स्थावरत्वादिजन्मभिः ॥ ७६ ॥
विलोमं शूद्रविट्क्षत्रब्राह्मणेष्वेषु[3] योजयेत् ।
क्रियाः षोडश मूलेन पाकयज्ञादिभिः क्रमात् ॥ ७७ ॥
शोधयित्वाश्वमेधान्तैः कल्पयेदन्त्यमाश्रमम्[4] ।
कृत्वान्त्येष्टिं पिशाचादियोन्यष्टकविभागतः ॥ ७८ ॥
त्रिसुरान्तं क्रमान्नीत्वा नाशयेत् कर्मबन्धनम् ।
ततः सम्प्रोक्ष्य तद्देहमाहुतीनां शतेन तम् ॥ ७९ ॥
सृष्टीश्वरमुदासीनं पूर्णाहुत्या च कल्पयेत् ।
मूलजप्तेन शुक्लेन रजसा हृदि ताडयेत् ॥ ८० ॥

---

१. 'शन्' ख. ग. पाठः. २. 'भिः कृत्वा' क. ध. पाठः. 'गेगु' नियो' ख. पाठः. ४. 'येत्वान्त्य' क. घ. पठः.

वियुङ्क्ष्वहुंफडन्तेन नाम्ना तत्त्वाक्षरादिना ।
विश्लेष्यायाहिहामन्तबीजाद्यामन्त्रितेन च ॥ ८१ ॥

आदाय समतां नीत्वा युङ्क्ष्वहुंफडिति क्रमात् ।
प्रकृत्याकृत्य तेनैव संहरान्तेन होमयेत् ॥ ८२ ॥

वह्नावखिलतत्त्वानामालयेऽव्याकृते हरौ ।
लीयमानं क्रमात् सर्वं तत्त्वाध्वानं स्मरेद् बुधः ॥ ८३ ॥

शुद्धं परेण तत्त्वेन पूर्णाहुत्या च सन्धयेत् ।
एवं तत्त्वानि संशोध्य प्रकृतिं परमात्मनि ॥ ८४ ॥

विलाप्य ज्ञानयोगेन दद्यात् पूर्णाहुतिं बुधः ।
निर्वाणे प्रकृतिं दग्ध्वा सन्दध्यात् पूर्णया परे ॥ ८५ ॥

अधिकारे समादध्यान्नरं प्राकृतमीश्वरे ।
इष्ट्वा देवमशक्तौ तु सर्वोपकरणान्वितम् ॥ ८६ ॥

सद्योऽधिवास्य द्वादश्यां दीक्षयेत् स्थण्डिलेऽपि वा ।
अष्टाष्टाहुतिभिः पूर्वं क्रमात् तत्त्वानि शोधयेत् ॥ ८७ ॥

मनसो वासना येयं सा मुक्तेः परिपन्थिनी ।
तच्छुद्ध्या शुध्यति क्षेत्री दुष्टया दूष्यते च सः ॥ ८८ ॥

मनसो वासनोच्छेदः कर्मबन्धविमोचनात् ।
निर्बीजकरणं तस्य शोधनं समुदाहृतम् ॥ ८९ ॥

गुरुणा योजितो नित्यं योगी योगं समभ्यसेत् ।
न सिध्यति विना तेन योगो नास्त्यत्र संशयः ॥ ९० ॥

दग्धाङ्गं विस्फुलिङ्गाभमाकृष्य स्वौजसा गुरुः ।
नाभिदेशात् परे तत्त्वे पूर्णाहुत्या नियोजयेत् ॥ ९१ ॥

१. 'रन् बु', २. 'मा' क. घ. पाठः.

ततः संसारविषयः स्वभावाद् विनिवर्तते।
ततस्ताञ्छिक्षयेत् सर्वान् समयाञ् श्रावयेद् गुरुः॥ ९२॥
शिष्योऽपि गुरुपादार्चां कृत्वा दद्याच्च दक्षिणाम्।
शक्त्या हिरण्यवस्त्रादि भक्त्यात्मानं च सर्वथा॥ ९३॥
तत्तुष्टयेशो भवेत् तुष्ट एवं सर्वार्थसिद्धयः॥ ९३[1]॥

इति विष्णुसंहितायां दशमः पटलः॥

## अथैकादशः पटलः।

अथ वक्ष्यामि संक्षेपाद् दीक्षितस्याभिषेचनम्।
पुत्रको देशिको वापि येनाचार्यत्वमृच्छति॥ १॥
प्रथमं समये दीक्षा तन्त्र[2]ज्ञाने ततोऽर्चने।
तिस्रो ह्येताः प्रयोक्तव्या दीक्षा[3] धर्मविवृद्धये॥ २॥
आलिख्य मण्डलं पूर्वं परिवारसमायुतम्।
दर्शयेच्छिष्यमाचार्यो यमसौ समयी स्मृतः॥ ३॥
मण्डले देवमाराध्य पुष्पाञ्जलिपुरस्सरम्।
दर्शयेद् विधिना यं[4] तु स भवेत् तन्त्रदीक्षितः॥ ४॥
अग्नौ हुत्वाखिलान् मन्त्रान् पूजयित्वा च तं प्रभुम्।
दर्शयेद् विधिना यं[5] तु स ज्ञेयो देशिकोऽर्चकः॥ ५॥
पुत्रकोऽधीत्य तन्त्रा[6]णि द्वितीयं मन्त्रमाप्नुयात्।
तृतीयं पूजयेद् देवमित्येवं त्रिविधः क्रमः॥ ६॥
एकेनैव प्रयोगेण तिस्रो दीक्षा ह्यनुग्रहे।
समयग्रन्थपूजार्थाः कर्तव्यास्तत्त्ववेदिना॥ ७॥

---

१. 'ज्ञापये' क. घ. पाठः. २. 'न्त्रा' ख. ग. पाठः. ३. 'क्षां' क. घ. पाठः.
४., ५. 'यस्तु' ख. पाठः. ६. 'णां', ७. 'मात्', ८. 'स्त्व' क. घ. पाठः.

पूर्वं कृत्वा तु संस्कारं गर्भाधानादिकं क्रमात् ।
व्रतबन्धान्तमाचार्यस्तत्त्वेन परमेण वै ॥ ८ ॥
एकैकं दशहोमेन ततस्तत्त्वानि संहरेत् ।
वेकारादीनि तत्त्वानि पञ्चभूतात्मकानि वै ॥ ९ ॥
ध्यात्वा शिष्यशरीरे तु षष्ठं क्षेत्रज्ञलक्षणम् ।
होमेन शोधयित्वान्ते पूर्णया योजयेत् परे ॥ १० ॥
पञ्चभूतस्वरूपेण तत्र माया व्यवस्थिता ।
षष्ठं तु परमं तत्त्वमबद्धं परमार्थतः ॥ ११ ॥
न स्वभावस्य विच्छित्तिर्भवेदग्न्यौष्ण्यवद् यतः ।
तस्माद् घटादिवद् बद्धो व्योमवत् परमं पदम् ॥ १२ ॥
एवं ज्ञात्वा तु मेधावी व्यतिरिक्तं निरञ्जनम् ।
घटवद् यः[1] स्मृतो बन्धस्तं होमेन विनाशयेत् ॥ १३ ॥
पृथिव्यादि समारभ्य वेकाराद्यैस्तु पञ्चभिः ।
एकैकं शतहोमेन क्रमात् तत्त्वानि शोधयेत् ॥ १४ ॥
पञ्च पूर्णाहुतीर्हुत्वा[2] बन्धच्छेदं च भावयेत् ।
क्षेत्रज्ञं शतहोमान्ते मायाबन्धविवर्जितम् ॥ १५ ॥
ध्यायन् पूर्णाहुतिं दद्यान्मुक्तिदीक्षेयमुत्तमा ।
समयादिविभागेन कर्म यस्य यदीरितम् ॥ १६ ॥
तदेवास्य पुनः कार्यं प्रायश्चित्तविधावपि[3] ।
अब्देऽब्देऽपि च कर्तव्या दीक्षा शिष्येष्वनुग्रहात् ॥ १७ ॥
यागैर्द्वादशभिर्यस्तु दीक्षितोऽसौ हरिः स्वयम् ।
यं तु शिष्यं गुणोपेतमाचार्यः कर्तुमिच्छति ॥ १८ ॥

---

१. 'यत् स्मृ', २. 'दत्त्वा ब' क. घ. पाठः. ३. 'वापि' क. ख. पाठः.

तस्याभिषेचनं कुर्याद् विधिनानेन मन्त्रवित् ।
राज्ञोऽभिषेचनं कुर्याद् विधिनानेन मन्त्रिणः[1] ॥ १९ ॥
साधकस्यानपत्यस्य दरिद्रस्य च रोगिणः ।
पूर्ववन्मण्डलं कृत्वा सर्वलक्षणलक्षितम् ॥ २० ॥
समभ्यर्च्यात्र देवेशं हुत्वाग्नौ च यथाविधि ।
कलशान् स्थापयेदग्रे निर्दोषान् सूत्रवेष्टितान् ॥ २१ ॥
पञ्चरत्नसमायुक्तान् सहिरण्यान् सपल्लवान् ।
वेष्टितान् वस्त्रयुग्मैस्तु चतुरो दिक्ष्वनुक्रमात् ॥ २२ ॥
मध्यतः पञ्चमं चैव सकूर्चं सापिधानकम् ।
प्रणवं कलशे पूर्वे सर्वमन्त्रात्मकं न्यसेत् ॥ २३ ॥
अकारं दक्षिणे चैव सर्वतन्त्रात्मकं बुधः ।
पश्चिमे विष्णुगायत्रीमधिकारमयीं तथा ॥ २४ ॥
उत्तरेऽपि न्यसेद् विष्णुं सर्वगं ज्ञानविग्रहम् ।
मध्यमे वैष्णवं बीजं शब्दब्रह्म सनातनम् ॥ २५ ॥
ततस्तानर्चयेत् सर्वान् गन्धपुष्पाक्षतैः क्रमात् ।
योगाधिकारतन्त्रार्थसर्वविद्यासमन्वितान् ॥ २६ ॥
यथोक्तमातृकाब्जस्थतारादिज्योतिषोऽखिलान्[2] ।
मन्त्रतन्त्रादिरूपेण ध्यात्वा देवं पृथक् क्रमात् ॥ २७ ॥
सहस्रावर्तितं कुर्याच्छतावर्तितमेव वा ।
एकैकं कलशं त्वेवमाचार्यः सुसमाहितः ॥ २८
ततो होमं च[3] कुर्वीत यथावत् साधकेश्वरः ।
उपसंहारमार्गेण निर्वाणाख्यं[4] यथोदितम् ॥ २९ ॥

१. 'न्त्रवित्' ख. पाठः. २. 'लाः' ग. पाठः. ३. 'तु', ४. 'ख्ये' क. घ. पाठः.

एवं योगविधानेन कृत्वा तत्राधिवासनम् ।
अभिषेकं ततः सम्यक् कुर्याद् वै साधकस्य तु ॥ ३० ॥
मण्डपस्योत्तरे पार्श्वे पूर्वे कृत्वा सुशोभनाम् ।
एकहस्तां द्विहस्तां वा चतुर्हस्तां तु वेदिकाम् ॥ ३१ ॥
तालोच्छ्रितां चतुःस्तम्भे मण्डपे छदनान्विते ।
वितानवस्त्रसञ्छन्ने स्रग्दामादिविभूषिते ॥ ३२ ॥
अलंकृते यथाशोभं लाजकुम्भैश्चतुर्दिशम् ।
लिखित्वा स्वस्तिकं मध्ये चतुरश्रं सुशोभनम् ॥ ३३ ॥
सितेन रजसा तत्र श्रीपर्णीद्रुमसम्भवम् ।
भद्रपीठं तु संस्थाप्य चतुरश्रं नवं शुभम् ॥ ३४ ॥
अनन्तं साम्बुजं तस्मिन् धर्मादिमयमर्चयेत् ।
ततोऽग्रे प्राङ्मुखः स्थित्वा ध्यात्वा पीठगतं प्रभुम् ॥
मनसा पूजयित्वा तु कार्यमेनं निवेदयेत् ।
भगवन्! दीक्षितस्योक्तमाचार्यत्वेऽभिषेचनम् ॥ ३६ ॥
तत् करिष्याम्यनुज्ञातस्त्वया सर्वार्थसिद्धये ।
लब्धानुज्ञस्ततः कुर्यादभिषेकं यथाविधि ॥ ३७ ॥
सृष्टिक्रमेण वै ध्यात्वा तत्त्वाध्वानं सुभावितः ।
प्रवेशयेद् गुरुः शिष्यं प्राङ्मुखं शुक्लवाससम् ॥ ३८ ॥
ध्यात्वानन्तासनस्थं तमर्चितं विष्णुमव्ययम् ।
आनीय कलशानत्र स्वासु दिक्षु निवेशयेत् ॥ ३९ ॥
स्त्रीभिः सुस्वरकण्ठाभिर्गीयमानेऽथ मङ्गले ।
शङ्खतूर्यनिनादेन नीराजनपुरस्सरम् ॥ ४० ॥

१. 'कुर्याद् सम्यग् वै' ख. ग. पाठः. २. 'तु', ३. 'स' ग. पाठः. ४., ५. 'तं', ६. 'र्यादिना' क. घ. पाठः.

ततोऽभिषेचयेत् सार्धं ब्रह्मघोषेण देशिकः ।
पूर्वोक्तैरेव मन्त्रैस्तु ध्यात्वा मन्त्रात्मकं जलम् ॥ ४१ ॥
प्रतिकुम्भं तथाभ्यर्च्य धूपयित्वा यथाक्रमम् ।
चतुर्भिः पञ्चमेनाथ परे[1]ज्ञानात्मकेन च ॥ ४२ ॥
नीराजनं पुनः[2] कृत्वा पूजयेद् गन्धपुष्पकैः ।
परिधाप्य नवे वस्त्रे शोभने तमुपागतम् ॥ ४३ ॥
आचान्तमुपवेश्याग्रे बृसीं दत्त्वा स्वयं गुरुः ।
सोऽपि प्रणम्य देवेशं तस्यासासीत वाग्यतः ॥ ४४ ॥
सकलीकृत्य मन्त्रैस्तं पूजयेत् पूर्ववत् पुनः ।
योगपट्टकमुष्णीषं चक्रं चैवाङ्गुलीयकम् ॥ ४५ ॥
अधिकारं स्वकीयं च तत्त्वं चास्मै निवेदयेत् ।
दद्याच्च वैष्णवं ज्ञानं संसार[3]च्छेदकारणम् ॥ ४६ ॥
श्रावयेत् समयांश्चै[4]तांस्तन्त्रोक्तान् देशिकोत्तमः ।
अनुग्राह्यास्त्वया शिष्या वैष्णवाः शुभचारिणः ॥ ४७ ॥
ब्राह्मणाः क्षत्रिया वैश्याः शूद्रा योषित एव वा[5] ।
अन्यदेवरता ये तु चातुर्वर्ण्याच्च ये बहिः ॥ ४८ ॥
डाम्भिकाः पापकर्माणो देवब्राह्मणनिन्दकाः ।
तेषामनुग्रहो नैव कर्तव्यो वैष्णव[6]! त्वया ॥ ४९ ॥
समीपे तु गुरुर्यत्र न कर्तव्या स्वतन्त्रता ।
बहुयोजनमात्रे तु आचार्यो यत्र तिष्ठति ॥ ५० ॥
तत्र दीक्षा न कर्तव्या अनुक्तेन त्वयानघ ! ।
गुरुपूजा च कर्तव्या यथा विष्णोस्तथा त्वया ॥ ५१ ॥

---

१. 'रि' ग. पाठः. २. 'ततः कु', ३. 'रोद्वेगका', ४. 'श्चैव तन्त्रो', ५. 'च' क. घ. पाठः. ६. '[illegible]' ख. ग. पाठः

व्याख्यानादिषु कालेषु स्मर्तव्यश्च सदा गुरुः ।
न कदाचित् त्वया कार्यमप्रमाणं गुरोर्वचः ॥ ५२ ॥
कृते प्रमादे कर्तव्यं प्रायश्चित्तं तदाज्ञया ।
न कदाचिच्च कर्तव्यो लोकोद्वेगस्त्वयानघ! ॥ ५३ ॥
वैष्णवानां च वैभाष्यं यच्च लोकेऽपि गर्हितम् ।
प्रतिपत्तिश्च वृद्धानां कर्तव्या शास्त्रतस्त्वया ॥ ५४ ॥
अभिमानो न कर्तव्यः स्वप्नेष्वपि कदाचन ।
समयाश्च त्वया वत्स! आचाराश्च मयोदिताः ॥ ५५ ॥
पालितव्याः प्रयत्नेन यावज्जीवं ममाज्ञया ।
आचार्यो वैष्णवे तन्त्रे त्वं भव प्राणिनां प्रियः ॥ ५६ ॥
शिष्यास्त्वामुपसर्पन्तु तेषु वर्तस्व शास्त्रवत् ।
नार्थलोभेन वर्तेथा नाशया न भयेन वा ॥ ५७ ॥
पञ्चरात्रे विशेषेण देवं च सततं स्मर ।
अयनादिषु कालेषु यष्टव्यो विष्णुरव्ययः ॥ ५८ ॥
गुरवः पूजनीयाश्च मनोवाक्कायकर्मभिः ।
वृथा हिंसा न कर्तव्या भर्तव्याश्च स्वशक्तितः ॥ ५९ ॥
दीनानाथास्तथान्धाश्च पूज्या विप्राश्च सर्वदा ।
उद्युक्तः सर्वदा तिष्ठेन्नित्यकर्मण्यतन्द्रितः ॥ ६० ॥
स्वल्पमह्नो जपं कुर्यात् स्वल्पमग्नौ च होमयेत् ।
स्वल्पं वै ध्यानमातिष्ठेत् सत्रमेतत् सदा गुरोः ॥ ६१ ॥
एवमुक्त्वा गुरुः शिष्यं देवाग्रस्थं सुचेतसम् ।
तन्त्रं चैवाखिलं दद्यात् साधके मन्त्रमेव तु ॥ ६२ ॥

१. 'ह्नि', २. 'न' क. घ. पाठः. ३. 'को' क. पाठः.

देवस्य पुरतो गन्धपुष्पाक्षतयुतैर्जलैः ।
चुलुकं पूरयित्वा तु मन्त्रमुच्चार्य तत्करे ॥ ६३ ॥
प्रदद्यात् सिध्यतां शीघ्रं तवेष्टं मन्त्रजं फलम् ।
इत्युक्तः स्वयमुत्थाय कृत्वाचार्यं प्रदक्षिणम् ॥ ६४ ॥
आसने स्थापयित्वास्य पादौ प्रक्षाल्य भक्तितः ।
तोषयेद् धनधान्येन[1] शक्तिभक्तिवशाद् गुरुम् ॥ ६५ ॥
परितोष्य तु पाणिभ्यामुपसङ्गृह्य पादयोः ।
प्रार्थ्य पूजय देवं त्वमित्यनुज्ञापयेद् गुरुम् ॥ ६६ ॥
लब्धानुज्ञः स शिष्योऽपि ततः प्रभृति पूजयेत् ।
एवं तेनाननुज्ञातो यः पूजां कुरुते नरः ॥ ६७ ॥
न तस्य पूजया सिद्धिरिति शास्त्रस्य निश्चयः ।
तस्मान्मण्डलमध्यस्थं देवमाचार्यपूजितम् ॥ ६८ ॥
दृष्ट्वानुज्ञां गुरोः प्राप्य पूजयेत् पुरुषोत्तमम् ।
एवं यो वैष्णवीं दीक्षां कुर्यात् कारयिता च यः ॥ ६९ ॥
तावुभौ गच्छतः स्वर्गं नरकं च विपर्यये ।
विष्वक्सेनं च यागान्ते दिश्यैशान्यां प्रपूजयेत् ॥ ७० ॥
पिङ्गश्मश्रुं विवृत्ताक्षं गदापाणिं चतुर्भुजम् ।
शङ्खचक्रधरं देवं जगत्संरक्षणे स्थितम् ॥ ७१ ॥
तर्जयन् वामतर्जन्या नासाग्रासन्नया जगत् ।
वारुणे मण्डले साङ्गं शिष्टद्रव्यैस्तु पूजयेत् ॥ ७२ ॥
विसृज्योक्तेन विधिना मण्डलस्थमधोक्षजम् ।
निर्माल्यं सकलं तस्मै समाहृत्य निवेदयेत् ॥ ७३ ॥

---

१. 'दानेन' क. घ. पाठः.

तस्य विं वां नमः ष्वं वीं स्वाहेति च यथाक्रमम् ।
क्सें वूं वषट् तथा विष्वं वैं हुमित्यपि कल्पयेत् ॥ ७४॥
क्सेन वः फडितीमानि पञ्चाङ्गानि तदर्चने ।
प्रणीतास्थं जलं सिक्त्वा प्रस्तरोपरि तेन तु ॥ ७५ ॥
आत्मानं सह शिष्यैस्तु प्रोक्ष्याग्निं च विसर्जयेत् ।
विष्वक्सेनं विसृज्यास्मै निर्माल्यं सकलं ततः॥ ७६ ॥
पूर्वदत्तं जलेऽगाधे धृतमन्यैर्निधापयेत् ।
वैष्णवान् पूजयेच्छक्त्या ब्राह्मणांस्तु विशेषतः ॥ ७७ ॥
अनिवारितमन्नाद्यं सार्वजन्यं च कारयेत् ।
एवमाचार्यतां प्राप्तो दीक्षितो धर्मवत्सलः ॥ ७८ ॥
वर्णाश्रमरतो भक्तो विनीतः समयान्वितः ।
एककालं द्विकालं वा त्रिकालं वार्चयेद्धरिम्[1] ॥ ७९ ॥
शिष्यानथानुगृह्णीयाद् दीक्षापूजाभिषेचनैः ।
स्थापनादिक्रियायां च तथाचार्यत्वमर्हति ॥ ८० ॥
दीक्षान्ते चाभिषेकान्ते शक्त्या सम्पूज्य वैष्णवान् ।
प्रभातेऽवभृथं गच्छेद् यत्र तीर्थं परं भवेत् ॥ ८१ ॥
तत्र स्नात्वार्चयित्वा च ब्राह्मणैः स्वस्ति वाचयेत् ॥८१½॥

इति विष्णुसंहितायामभिषेको[2] नामैकादशः पटलः ॥

---

अथ द्वादशः पटलः ।

अथ वक्ष्यामि संक्षेपाद् यागभूमेस्तु लक्षणम् ।
यत्रेष्ट्वा विधिवद्[3] देवं लभ्यन्ते सर्वसिद्धयः ॥ १ ॥

---

१. 'समर्चयेत्', २. 'कपटल एकादशः ॥' ख. ग. पाठः. ३. 'ना दे' ख. ग. घ. पाठः.

त्रिधोत्तमाधमा मध्या चतुर्धा जातिभेदतः ।
सुपद्मा भद्रिका पूर्णा धूम्रेत्यपि तथैव भूः ॥ २ ॥
बहुपांसुरशुष्काम्बुः क्षिप्रं व्रीह्यादिरोहणा ।
प्रदक्षिणजला श्रेष्ठा समा शीतोष्णकालयोः ॥ ३ ॥
नदी पूर्ववहा यत्र क्षीरपुष्पफलद्रुमाः ।
रमन्ते यत्र गोमर्त्याः समा स्निग्धा च सोत्तमा ॥ ४ ॥
शङ्खाभ्रादिस्वरा[1] चेष्टा सवर्णा सर्ववर्णिनाम् ।
अलाभे कृत्रिमैवं स्यादधमा स्यादतोऽन्यथा ॥ ५ ॥
सर्वप्लवा च मध्योक्ता लक्षणैश्च शुभाशुभैः ।
चतुरश्राष्टषड्भागपादाधिकसमायता ॥ ६ ॥
विप्रादीनां स्मृता भूमिः सर्वेषां वोत्तमस्य या ।
सिता रक्ता च पीता च कृष्णा विप्रादिभूस्तथा ॥ ७ ॥
मधुरा च कषाया च तिक्ता च कटुका क्रमात्[2] ।
घृतासृक्चरुविड्गन्धा बहुवर्णा तु वर्जिता ॥ ८ ॥
धान्यपूर्णामकुम्भस्थवर्धमानाज्यवर्त्तिभिः ।
सितादिभिर्निशि ज्ञेया प्रज्वाल्यावृत्य दर्शनात् ॥ ९ ॥
स्नाते राज्युषितैः पुष्पैस्तथा ज्ञेया सितादिभिः ।
वल्मीकशर्करारन्ध्रतुषाङ्गारास्थिभस्मभिः ॥ १० ॥
केशकर्दमकीटैश्च संयुक्तां वर्जयेन्महीम्[3] ।
धूम्रतारौक्ष्यदौर्गन्ध्यकाठिन्यैश्चाशुभा मही ॥ ११ ॥
अदिक्स्था जलहीना च कुटिला द्विगुणायता ।
वृत्ता पञ्चत्रिषट्कोणा चार्धचन्द्रा च शूर्पिका ॥ १२ ॥

---

१. 'शखाभ्रा', २. 'तथा । घृ', ३. 'येत् क्षितिम्' ख. ग. पाठः.

पीलुशेल्वक्षवेण्वर्कस्नुक्पिशाचकद्रुमैः ।
श्येनगृध्रर्क्षगोमायुसूकरध्वाङ्क्षवानरैः ॥ १३ ॥
रक्षोयमाग्निवाताप्यनिम्नत्वेन च निन्दिता ।
मध्यनिम्ना सगर्भा च प्रतिलोमा च नेष्यते ॥ १४ ॥
कुशैः शरैश्च दूर्वाभिः काशैश्च ब्राह्मणादिभूः ।
पुष्पैर्दीपैश्च विज्ञेया नत्वा विज्ञाप्य तं प्रभुम् ॥ १५ ॥
निमित्तं ब्रूहि मे देव कल्पप्रोक्तं द्विजादिकम् ।
वर्णार्थं तु प्रयुक्ते तु ततो वर्त्तिचतुष्टये ॥ १६ ॥
मुहूर्ते गमिते यस्य दीपो ज्वलति तस्य भूः ।
वास्तु संकीर्णमिष्टं च सर्वेषां सर्वभासनात् ॥ १७ ॥
न्यग्रोधोदुम्बराश्वत्थप्लक्षाः पूर्वादयः शुभाः ।
एते व्यस्ताः समस्ता वा शस्ता वामास्त्वकामदाः ॥ १८ ॥
नादेयं तु जलं श्रेष्ठं दिक्षु सर्वास्ववस्थितम् ।
कूपमैन्द्रैशसौम्येषु न चैकसलिलं शुभम् ॥ १९ ॥
जलाद्रिवृक्षगुल्माश्च पूर्वादिषु शुभाः स्थिताः ।
शिग्रुनिम्बादयश्छेद्यास्तत्र हस्तशतान्तरे ॥ २० ॥
बहिःस्थिता न दोषाय मध्ये कार्यास्तु वा शुभाः ।
द्विगुणं गृहवृक्षोच्चं त्यक्त्वा दोषाय न स्थिताः ॥ २१ ॥
गृहोच्चद्विगुणाद् बाह्ये फलपुष्पद्रुमास्तथा ।
बकुलाशोकपुन्नागनागचन्दनचम्पकाः ॥ २२ ॥
बिल्वाम्रपनसाद्याश्च पलाशाद्याश्च शोभनाः ।
अन्तस्सारं बहिस्सारं निस्सारं सर्वसारकम् ॥ २३ ॥

१. 'मिन्द्रेश' ख. ग. पाठः.

चतुर्धा स्थावरं[1] तेषामसारं न गृहाग्रतः ।
कदल्यादि बहिर्धार्यं गृहपृष्ठान्तपक्षतः ॥ २४ ॥
सर्वसारं तु सर्वत्र चिञ्चादि परिकीर्त्तितम् ।
अन्तस्सारं तथा विद्याद् बहिस्सारमसारवत् ॥ २५ ॥
अपि सौवर्णकं वृक्षमुपगेहं न धारयेत् ।
गुल्मवल्ल्योषधीनां तु नैकान्तो विधिरीदृशः ॥ २६ ॥
चन्दनागरुकर्पूरकदम्बतिलकार्जुनैः ।
क्रमुकैर्नालिकेरैश्च कुशैर्दर्भैः समावृता ॥ २७ ॥
पद्मोत्पलवनाकीर्णा तोयाढ्यैन्द्रोत्तरप्लवा ।
केतकीक्षुसमाकीर्णा सुपद्मा शान्तिदा मही ॥ २८ ॥
नदीसागरपर्यन्ततीर्थायतनमाश्रिता ।
क्षीरवृक्षसमाकीर्णा फलवृक्षसमाकुला ॥ २९ ॥
उद्यानोपवनोपेता फुल्लगुल्मलताकुला ।
पश्चिमे याज्ञिकैर्वृक्षैर्व्रीहिक्षेत्रेण[2] दक्षिणे ॥ ३० ॥
भद्रिका भूमिराख्याता सुखदा तत्र यज्वनाम् ।
किंशुकाशोकवकुलैरङ्कोलैश्चैव निम्बकैः ॥ ३१ ॥
खदिरै रोहितैः प्लक्षैर्माधवीचम्पकासनैः ।
कुलस्थतिलनिष्पावकोद्रवैश्च समाकुला ॥ ३२ ॥
गिरिपार्श्वाश्रिता चैव गिरेः शिखरमाश्रिता ।
अप्रभूतोदका भूमिः सा[3] पूर्णेति च पुष्टिदा ॥ ३३ ॥
पीलुवेणुवनाकीर्णा स्नुहिश्लेष्मातकान्विता ।
विभीतकार्कसङ्कीर्णा कठिना शर्करान्विता ॥ ३४ ॥

---

१. 'रास्तेषां' ख. ग. पाठः. २. 'त्रं तु द' ग., 'त्रं च द' ख. पाठः. ३. 'सा हि पूर्णेति पु' ख. ग. पाठः.

श्येनगृध्रर्क्षगोमायुसूकरध्वाङ्क्षसङ्कुला ।
सोषरा गर्भयुक्ता च क्षयदा धूम्रिका भवेत् ॥ ३५ ॥
एवं परीक्ष्य यत्नेन गन्धवर्णरसादिभिः ।
गुल्मादि परिशोध्यात्र कर्षयेल्लाङ्गलैः शुभैः ॥ ३६ ॥
पञ्चधा दशधा वापि सर्वधान्यानि वापयेत् ।
कर्षयित्वाथ भूयोऽपि कुर्यात् पुष्पफलान्विताम् ॥ ३७ ॥
अत्यन्तोपहता या तु तस्याः शुद्धिरथोच्यते ।
शतशः कर्षयित्वा तु गोकुलं तत्र वासयेत् ॥ ३८ ॥
ततो वर्षोषिते कृष्ट्वा तिलादीन्यत्र वापयेत् ।
यदा सस्येषु पुष्पाणि फलानि च भवन्ति हि ॥ ३९ ॥
तदा कृष्ट्वा पुनर्भूमिः शुद्धिमृच्छत्यसंशयम् ।
भूतक्रूरबलिं तत्र पूर्वं दत्त्वा विचक्षणः ॥ ४० ॥
यावत् प्राकारपर्यन्तं तावत् कुर्यात् परिग्रहम् ।
भूतानि राक्षसा वापि यत्र तिष्ठन्ति केचन ॥ ४१ ॥
ते सर्वे ह्यपगच्छन्तु स्थानं कुर्यामहं हरेः ।
इत्यनुज्ञाप्य भूतादींस्ततस्तं विधिमाचरेत् ॥ ४२ ॥
इन्द्रादीशावसानं[2] तु शङ्कुद्विगुणवेष्टनात् ।
निमित्तैः शोभनैर्मन्त्री कुर्यात् सूत्रप्रसारणम् ॥ ४३ ॥
पुन्नामैकतरूद्भूता निर्घृणाः शङ्कवो दृढाः ।
प्राङ्मुखेनाष्टधा ताड्याः पूजिता लोहमुद्गरैः ॥ ४४ ॥
खात्वा पुरुषमात्रं तु जलाश्मान्तमथापि वा ।
ततो न्यस्य घटं मध्ये विधिनापूर्णमर्चितम् ॥ ४५ ॥

---

१. 'व्य' ख., 'प्य' ग. घ. पाठः. २. 'नान्तं श' ख. ग. पाठः.

सरत्नं धान्यराशिस्थं मुहूर्त्ते मङ्गलान्विते ।
सुमृद्भिः खातमापूर्य हस्तपूरं ततोऽश्मभिः ॥ ४६ ॥
पादोनं प्लावयित्वाद्भिः पालाशाश्वत्थमुद्गरैः ।
आकोट्य घर्षयित्वा च सुदृढं कारयेत् तलम् ॥ ४७ ॥
द्वारदेशेऽर्चयेद् देवं स्थण्डिलेऽग्निं च तर्पयेत् ।
चतुरश्रं समं कृत्वा तत्र वास्तुं च पूजयेत् ॥ ४८ ॥
सूत्रपातं पुनः कुर्यादेकाशीतिपदं यथा ।
सुसमः सुखदो वास्तुर्विषमो न सुखावहः ॥ ४९ ॥
दध्यक्षताज्यपुष्पाम्बुहेमरत्नैः प्रदक्षिणम् ।
मङ्गलार्थं लिखेत् पूर्वं नाङ्गुल्याद्यैः कदाचन ॥ ५० ॥
ईशमूर्ध्नि निर्ऋत्यङ्घ्रौ तत्रोत्तानशये स्थितान् ।
कुशपुष्पाक्षतान्नाँद्भिर्गन्धपुष्पैः प्रपूजयेत् ॥ ५१ ॥
ब्रह्मा नवसु मध्ये स्याद् दिक्षु षट्के द्विकेऽन्यतः ।
द्वात्रिंशद् बहिरीशादिक्रमादर्च्यास्तु देवताः ॥ ५२ ॥
ब्रह्मा मध्यपदे पूज्यः तत्प्राच्यामार्यकस्ततः ।
सावित्रः सविता चाग्नौ ततो द्विपदगौ स्मृतौ ॥ ५३ ॥
विवस्वान् दक्षिणे षट्के जयन्तेन्द्रौ द्विकद्वये ।
षट्के तु पश्चिमे मित्रो वायव्यद्विकयोः पुनः ॥ ५४ ॥
राजयक्ष्मा च रुद्रश्च षट्के क्षितिभृदुत्तरे ।
आपवत्सस्तथापश्च द्विकयोस्तद्बहिः शिवः ॥५५ ॥

१. 'कल्पये', २. 'कृत्वा एका' ख. ग. पाठः. ३. 'तः ।' ख. पाठः. ४. 'ना' क. पाठः. ५. 'पस्तथापवत्सश्च' ख. पाठः.

पर्जन्यश्च जयन्तेन्द्रसूर्यसत्यभृशाम्बराः ।
प्राच्यामग्न्यादिकान् वक्ष्ये पूषा च [1]वितथस्तथा ॥ ५६ ॥
गृहक्षतो धर्मराजो गन्धर्वो भृङ्गराजकः ।
मृगश्च नैर्ऋते कोणे पूजयेच्च पितॄंस्ततः ॥ ५७ ॥
दौवारिकं च सुग्रीवं पुष्पदन्तं जलाधिपम् ।
असुरं चैव शोषं च पापयक्ष्माणमेव च ॥ ५८ ॥
[2]वायुं नागं तथा मुख्यं भल्लाटं सोममेव च ।
अदितिं दितिं कुबेरं च बहिरीशादिषु क्रमात् ॥ ५९ ॥
चरकीं च विदारीं च पूतनां पापराक्षसीम् ।
शर्वस्कन्[3]दं चार्यमाणं जम्भकं पिलिपिञ्जकम् ॥ ६० ॥
दिक्षु तेषां बलिं दत्त्वा मध्यादारभ्य सर्वतः ।
भूतेभ्योऽपि बलिं दद्यादष्टदिक्षु यथाक्रमम् ॥ ६१ ॥
पूजिता वास्तुदेहस्थास्त्रिपञ्चाशत् तु देवताः ।
सिद्धये स्युरनर्थाय गृहभाजामपूजिताः ॥ ६२ ॥
सङ्कल्पितोपवासस्तु सुस्नातः सुसहायवान् ।
सुलिप्तायां समासीनः क्षितौ रात्रावुदङ्मुखः ॥ ६३ ॥
जपेत् स्वप्नप्रदं मन्त्रं यावन्निद्रावशंगतः ।
[4]ततः पश्यत्यसौ स्वप्नं तद्भूमि[5]फलसूचकम् ॥ ६४ ॥
सुस्वप्नेऽत्र गृहं कुर्यात् सुगृहर्क्षदिनोदये ।
सुमृदा स्थण्डिलं कृत्वा चतुर्हस्तं सुशोभनम् ॥ ६५ ॥

१. 'पितृतस्त' क. पाठः. २. 'रोगं ना' ख. ग. पाठः. ३. 'न्दोऽर्यमाह्वश्च ज', ४. 'अ' क. पाठः. ५. 'ब' ख. ग. पाठः. ६. 'न' क. घ. पाठः.

प्रलिप्य पद्ममध्यस्थमुदकुम्भं निवेशयेत् ।
सर्वौषधियुतं भद्रं रत्नगर्भं सपल्लवम् ॥ ६६ ॥
सितचन्दनदिग्धाङ्गं पद्ममालाविभूषितम् ।
सितवस्त्रयुगच्छन्नमव्यग्रं स्वस्तिकान्वितम् ॥ ६७ ॥
तन्मुखे प्रणवेनादौ ध्यात्वा कमलमुज्ज्वलम् ।
साङ्गुलीयकरो मन्त्री ग्रहांस्तत्र प्रकल्पयेत् ॥ ६८ ॥
बद्धपद्मासनान् हृष्टान् पूजयेच्च स्वनामभिः ।
सूर्यं रक्तं सितं सोमं रक्तमङ्गारकं पुनः ॥ ६९ ॥
बुधं चामीकरप्रख्यं कृष्णवर्णं शनैश्चरम् ।
पीतं बृहस्पतिं शुक्रं शुक्लमेव तु कल्पयेत् ॥ ७० ॥
राहुं चासितपीताभं कृष्णं केतुं यथाक्रमम् ।
स्ववर्णलक्षितैः पुष्पैः सर्वेऽर्च्यास्तु विधानतः ॥ ७१ ॥
कुर्याद्धोमं बलिं चान्ते गीतवादित्रसंयुतम् ।
स्तुतिं कृत्वा ग्रहाणां तु पवित्रं स्तोत्रमीरयेत् ॥ ७२ ॥
शुभाशुभमहार्थानि निमित्तानि ग्रहाधिप ! ।
दिव्यान्तरिक्षभौमानि पृच्छतो मे प्रकाशय ॥ ७३ ॥
इत्युक्त्वोद्धृत्य तं कुम्भं शाकुनं सूक्तमुच्चरन् ।
परितो भ्रामयेद् यत्नाज्जयशब्दादिसंयुतम् ॥ ७४ ॥
अनिष्टदर्शनेऽप्येवं भूमौ स्थापितपूजितम् ।
उद्धृत्य भ्रामयेद् भूयस्तदा खे दृश्यतेऽद्भुतम् ॥ ७५ ॥
सिद्धानां दर्शनं शब्दः सातपा वृष्टिरेव वा ।
रत्नपुष्पफलान्नानां धान्यमध्वाज्यवाससाम् ॥ ७६ ॥

---

१. 'पुष्पमा', २. 'ङ्गं' ख. ग. घ. पाठः. ३. 'रक्तकृष्णं शं' ख. ग. पाठः. ४. 'येदेवं तदा' ख. ग. पाठः.

दधिपाठीनभेकाना सूत्रस्य पिशितस्य च ।
कूर्मस्य वा महीपृष्ठे प्रपातो नभसः शुभः ॥ ७७ ॥
नृपब्राह्मणकन्यानां पूर्णकुम्भस्य दर्शनम् ।
हस्त्यश्वशिखिहंसाभ्रशङ्खवेणुसमाः स्वरा[1]ः ॥ ७८ ॥
इत्येवमादयो ज्ञेयाः कर्मकाले विचक्षणैः ।
स्पृष्टे घ्राते श्रुते दृष्टेऽप्यनिष्टे वर्जयेत् क्षितिम् ॥ ७९ ॥
दिनमन्यत् समासाद्य प्रागुक्तविधिवर्त्मना ।
सुनिमित्तं च विज्ञाय [2]कर्ता वै कर्म कारयेत् ॥ ८० ॥
तथेष्ट्वाग्निं क्षमेत्युक्त्वा ब्राह्मणैः स्वस्ति वाच्य[3] च ।
बलिं दत्त्वा खनेत् प्राग्वत् तां धरां पूरयेत् पुनः ॥
गृहमध्ये तु मेधावी शुभां पूर्वप्रकल्पिताम् ।
न्यसेत् कूर्मशिलां चैव यस्यां कूर्मो निवेश्यते ॥ ८२ ॥
राजतं विन्यसेत् कूर्मं सौवर्णं तद्वदेव तु ।
पूर्ववत् कल्पयेत् पद्मं साष्टवर्गां च मातृकाम् ॥ ८३ ॥
आधारशक्तिमन्त्रेष्ट्वा नत्वा विज्ञापयेत् ततः ।
त्वमेव परमा शक्तिस्त्वमेवासनधारिका ॥ ८४ ॥
सन्तृप्तया त्वया देवि ! स्थातव्यमिह सर्वदा ।
कूर्मराजमकूपारं तथा विश्वस्य धारकम् ॥ ८५ ॥
ध्यात्वा पूर्वोक्तपद्मस्थं स्वनाम्नैव तु पूजयेत् ।
नमस्ते कूर्मरूपाय विष्णवे विश्वधारिणे ॥ ८६ ॥

१. 'नाः' ख. ग. पाठः. २. 'तत्र वै' क. पाठः. ३. 'चयेत्' ख. ग. घ. ङ. पाठः.

करिष्यमाणं प्रासादमिह त्वं धर्तुमर्हसि ।
इति विज्ञाप्य तं भक्त्या गणेशं चात्र पूजयेत् ॥ ८७ ॥
कूर्मस्य दक्षिणे पार्श्वे पद्मं कृत्वा तु पूर्ववत् ।
नामयुक्तेन बीजेन गन्धपुष्पादिभिः क्रमात् ॥ ८८ ॥
कुर्याद् बीजस्य पञ्चाङ्गं त्रिदीर्घं द्वादशान्तगैः ।
निवेद्य लड्डुकापूपपृथुकादि विशेषतः ॥ ८९ ॥
ध्यायेद् गजाननं रक्तं बृहत्कुक्षिं चतुर्भुजम् ।
पाशाङ्कुशधरं भक्ष्यं दधानं दन्तमेव च ॥ ९० ॥
एवं सम्पूज्यते नित्यं गणेशो यत्र भक्तितः ।
विघ्नास्तत्र न जायन्ते वर्धन्ते चात्र सम्पदः ॥ ९१ ॥
मण्डले स्थण्डिले चैनं यागे यागे च पूजयेत् ।
गणेशं विधिना योऽसौ सम्यक् सिद्धिमवाप्नुयात् ॥
सुसमं स्थण्डिलं कृत्वा शङ्कुं चात्र यथाविधि ।
छायायोगेन विज्ञाय दिग्विभागमसंशयम् ॥ ९३ ॥
दिक्चिह्नान्यश्मसूल्लिख्य जगतीक्षेत्रबाह्यतः ।
रक्ष्याण्यागृहसिद्धेस्तु प्रासादं कारयेत् ततः ॥ ९४ ॥

इति विष्णुसंहितायां वास्तुपटलो द्वादशः ॥

---

## अथ त्रयोदशः पटलः ।

अथ वक्ष्यामि संक्षेपात् प्रासादविधिमुत्तमम् ।
यत्क्रियाव्यवसायोऽपि सद्यः सर्वाघनाशनः ॥ १ ॥

---

१. 'न्या' ख. ग. पाठः. २. 'यां भूपट' घ. ङ. पाठः.

अष्टेष्टकानिधानेऽपि फलं वक्तुं न शक्यते ।
अनुमेयं हि तैनैव फलं प्रासादविस्तरे ॥ २ ॥
सर्वयज्ञतपोदानतीर्थवेदेषु यत् फलम् ।
तत् सर्वं कोटिगुणितं यजमानस्य जायते ॥ ३ ॥
द्रव्यसंस्थानभेदाच्च फलं भूयोऽस्य वर्धते ।
हितं नातःपरं तस्माच्छक्तैः कार्यं तु सर्वथा ॥ ४ ॥
वृषाभ्यां कपिलाभ्यां तु समाभ्यां प्राङ्मुखो गुरुः ।
कृष्ट्वासनमयैरेव[1] यष्टीयुगहलैर्भुवम् ॥ ५ ॥
द्वादशाक्षरमन्त्रेण नववस्त्राद्यलंकृतः ।
शम्यासमीकृते गोभिः सस्यमुत्पाद्य खादयेत् ॥ ६ ॥
पुनः कृष्ट्वेष्टकाधानं कुर्याद् द्वारे[2] तु कल्पिते ।
द्वारस्य दक्षिणे भागे कर्तव्या प्रथमेष्टका ॥ ७ ॥
उल्लेखाद्याज्यभागान्तं कृत्वोदक्स्थण्डिले क्रमात् ।
पक्वं च विष्णुगायत्र्या हुत्वाथाज्याहुतीः क्रमात् ॥ ८ ॥
व्यस्तैरष्टाक्षरैरष्टौ व्याहृतीन्द्रादिभिस्ततः ।
अग्नये चैव सोमाय ग्रहेभ्योऽपि यथाक्रमम् ॥ ९ ॥
नक्षत्रेभ्यश्च[3] भूतेभ्यो नागेभ्य इति चैव हि ।
देवताभ्यश्च सर्वाभ्यो विश्वेभ्यश्चेति देशिकः ॥ १० ॥
विष्णवे चेति हुत्वान्ते व्याहृतीर्जुहुयात् ततः ।
समिदाज्यचरून् हुत्वा गायत्र्याष्टोत्तरं शतम् ॥ ११ ॥
ततः स्विष्टकृतं हुत्वा होमशेषं समाप्य च ।
इष्टकासु च मूलेन सम्पाताज्यं समर्पयेत् ॥ १२ ॥

---

१. 'नवैः ।' ख. ग. पाठः. २. 'स्थाने तु' ख. ग. घ. ङ. पाठः.
३. 'भ्योऽथ भू' ख. ग. घ. पाठः.

अश्वत्थशङ्कुना रेखाः पूर्वाग्राश्चोत्तराग्रकाः ।
तारेणाष्टौ समालिख्य प्राङ्मुखः सुसमाहितः ॥ १३ ॥
चतुरश्रे चतुष्कोष्ठे न्यस्याग्न्यनिलकोष्ठयोः ।
पूर्वाग्रसूत्रे सौम्याग्रे तथैव निर्ऋतीशयोः ॥ १४ ॥
स्थित्वा कृताञ्जलिः पश्चाद् ध्यात्वा देवमधोक्षजम् ।
मूलमष्टशतं जप्त्वा द्वादशाक्षरमेव च ॥ १५ ॥
ततः स्वाक्षरसङ्ख्यातो जपेदष्टाक्षरं बुधः ।
प्रभुं तं प्रणतो ध्यात्वा कोष्ठेष्वष्टभिरक्षरैः ॥ १६ ॥
अग्न्यादीन्द्रान्तमष्टौ ता इष्टका विन्यसेत् क्रमात् ।
उपानड्वत् प्रयुञ्जीत वर्जयेन्निम्नमुन्नतम् ॥ १७ ॥
इष्टकास्तु निधायैवं श्वभ्रं सम्पूर्य वारिभिः ।
सम्पातरत्नगन्धाढ्यैर्विमलैस्तु सुगन्धिभिः ॥ १८ ॥
कलशे पूरितैः पूर्वमर्चितैर्मन्त्रसंस्कृतैः ।
शुक्लपुष्पाक्षतान् न्यस्य तारेणावर्तमीक्षयेत् ॥ १९ ॥
शुभाशुभाविहावर्तौ ज्ञातव्यौ दक्षिणोत्तरौ ।
शाल्यादिक्षेत्रमृत्साभिर्गर्तं प्रच्छादयेत् ततः ॥ २० ॥
विसृज्य शिल्पिनोऽत्रापि कल्पयेत् स्वप्नदर्शनम् ।
शुभे लाभोऽशुभे मोक्षः शान्तिः कार्या त्वदर्शने ॥ २१ ॥
गर्भाधानं ततः कुर्यान्नागर्भे धाम्नि सम्पदः ।
मृत्तिका दश सङ्ग्राह्या मूलानि जलजानि च ॥ २२ ॥
धातवो रत्नबीजानि लोहादि च यदिष्यते ।
अष्टाङ्गुलं तदर्धोच्चं पादहीनोच्चरच्छदम् ॥ २३ ॥

---

१. 'शा' ख. ग. ङ. पाठः

सान्द्रं ताम्रमयं श्लक्ष्णं गर्भपात्रं च शोभनम् ।
सुगुप्तं तद्यथा भित्तौ भित्तिमानेन वा भवेत् ॥ २४ ॥
पादुकोपरि विप्रस्य भुवि राज्ञोऽन्ययोरधः ।
द्वारस्य दक्षिणे भागे तृतीयांशे द्विशेषिते ॥ २५ ॥
गोमूत्रेणाप्लुते न्यस्येद् द्वारमूलस्य पार्श्वतः ।
क्षालिते पञ्चगव्येन पात्रेऽस्मिन् परिशोधिते ॥ २६ ॥
धारणाभिर्यथान्यायं ध्यात्वा पीठेऽक्षराम्बुजम् ।
भूमण्डलमनन्तस्थं सशैलाम्भोधिदिग्गजम् ॥ २७ ॥
प्रादक्षिण्येन कृत्वान्तः पूर्वं सागरमृद्वृतिम् ।
दिग्विदिक्षु च मध्ये च गायत्र्या विन्यसेन्मृदः ॥ २८ ॥
गिरितीर्थनदीभ्यश्च ह्रदात् कर्कटकालयात् ।
वल्मीकखलदन्त्युक्षशृङ्गेभ्यश्चाहृताः क्रमात् ॥ २९ ॥
पङ्कजोत्पलयोर्मूले कुमुदस्य च देशिकः ।
दिक्षु लोहितकस्यापि चत्वार्येवं क्रमान्न्यसेत् ॥ ३० ॥
मनश्शिला हरीतालमञ्जनं श्यामसीसके ।
सौराष्ट्रीं रोचनां चैव गैरिकं पारतं तथा ॥ ३१ ॥
वज्रमौक्तिकवैडूर्यशङ्खस्फटिकपुष्यकान् ।
चन्द्रकान्तं महानीलं पद्मरागं तथा पुनः ॥ ३२ ॥
शालिनीवारकौ चैव कङ्कुमाषकुलुत्थकान् ।
निष्पावतिलमुद्गांश्च पाकपूर्णान् ससर्षपान् ॥ ३३ ॥
दिक्षु काञ्चनरूप्यायस्त्रपूण्यथ हिरण्मयम् ।
सुवर्णं कूर्मरूपं च शङ्खं चक्रं च कोणतः ॥ ३४ ॥

१. 'खरकक' घ. पाठः २. 'ल' ख. ग. घ. ङ. पाठः

धनुर्गदाम्बुजं मध्ये प्रत्येकं च हिरण्मयम् ।
एतत् सर्वं समानीय न्यस्तव्यं गर्भभाजने ।। ३५ ।।
कृत्वैवं पञ्चगव्येन प्रोक्ष्य द्वादशविद्यया ।
अग्नेर्दक्षिणतः कृत्वा जुहुयात् पूर्ववत् क्रमात् ।। ३६ ।।
घृतं द्वादशभिर्वर्णैर्देकपैर्नारायणेन च ।
तारादिना हुतान्तेन वक्ष्यमाणैश्च नामभिः ।। ३७ ।।
बीजानि सर्वधातूनि सर्वलोकाश्च पर्वताः ।
समुद्राः सर्वतीर्थानि[1] नद्यश्चाथ ह्रदास्तथा ।। ३८ ।।
पातालाश्चाथ नागाश्च दिग्गजा वृषभास्तथा ।
व्याहृत्यन्तं ततो हुत्वा सम्पातविधिनैव तु ।। ३९ ।।
आज्यं समर्प्य तत् पात्रं विधायाग्रकरस्थितम् ।
जप्त्वा मन्त्रं भुवं ध्यात्वा प्राङ्मुखो निशि देशिकः ।।४०।।
सुमुहूर्त्ते द्विजानुज्ञां प्राप्य तूर्यादिनिस्वनैः ।
शक्तिं ध्यात्वार्चयित्वास्यां[2] गर्भभूतमिदं स्मरन् ।। ४१ ।।
ब्रह्माण्डं पार्थिवं शुभ्रं गृहमूर्त्तिप्रसूतये ।
ध्यात्वास्मिन् पूर्ववच्चोर्वीं शनैर्मन्त्रमुदीरयेत् ।। ४२ ।।
सर्वभूतधरे! कान्ते! पर्वतस्तनमण्डिते ।
समुद्रपरिधाने! त्वं देवि! गर्भं समाश्रय ।। ४३ ।।
एवं न्यस्ते तु गर्भेऽस्मिन् सर्वत्र च सुखं भवेत् ।
हिरण्यं दाक्षिणां दत्त्वा[3] प्रासादं कारयेत् ततः ।। ४४ ।।
द्वार्स्थापनादधः[4] प्राग्वदिष्ट्वा वास्तुं यथाक्रमम् ॥
कृत्वा होमं च संस्पृश्य शक्त्या रत्नादि विन्यसेत् ।।४५।।

---

१. 'श्च', २. 'स्या' क. पाठः. ३. 'दद्यात् प्रा' ख, ग. पाठः.
४. 'स्था' ख, ग. घ. ङ, पाठः

द्वारमाच्छाद्य वस्त्राभ्यां गव्यादिक्षालितं शुभम् ।
गन्धादिभिः समभ्यर्च्य शान्तिहोमादिसंयुतम् ॥ ४६ ॥
मुहूर्ते स्थापयेद् विद्वान् मध्यान्मध्यं विमुच्य तु ।
आत्मतत्त्वमधो न्यस्य विद्यातत्त्वं च शाखयोः ॥ ४७ ॥
परतत्त्वं च मध्ये तत्[1] सुशिरस्संव्यवस्थितम् ।
स्थापयेत् प्रणवेनाथ[2] पूजयेच्च पुनः क्रमात् ॥ ४८ ॥
स्थिराप्रमेयव्यापित्वबोधनित्याविनाशिताः ।
तृप्तिश्च[3] सप्त होतव्याः क्रमादाहुतिसप्तकैः ॥ ४९ ॥
प्रतीहारादयो देवा ये तस्मिन् संव्यवस्थिताः ।
नामभिस्तेऽत्र होतव्यास्ततो देयश्च तद्बलिः ॥ ५० ॥
भित्तिस्तम्भादिविन्यासे सिरामर्मादिपीडनम् ।
सर्वथा परिहर्तव्यं वास्तुकोपोऽन्यथा भवेत् ॥ ५१ ॥
किञ्चिदुत्तरतो नीत्वा पूर्वतो वा सिरादिवित् ।
स्तम्भादीन् विन्यसेदेवं वेधदोषो न जायते ॥ ५२ ॥
प्राग्द्वारमृषभस्थं स्याद् ध्वजस्थं पश्चिमेमुखम्[4] ।
अन्यथा सर्वनाशः स्यादायदोषान्न संशयः ॥ ५३ ॥
प्राग्द्वारं ग्राममध्ये स्यात् पश्चिमे चोत्तरे तथा ।
दक्षिणेन्द्राग्निषु प्रायः पश्चिमद्वारमिष्यते ॥ ५४ ॥
त्रिंशदन्तं त्रिहस्तादि सप्तान्तैकादिभूमिकम् ।
वृत्तं वा चतुरश्रं वा दर्शनीयं तु कारयेत् ॥ ५५ ॥
भूवृद्ध्या वायुवह्नीन्द्रवरुणार्केन्दुविष्णवः ।
गृहाणां देवता ज्ञेया भूमीनां मूर्तयोऽपराः ॥ ५६ ॥

---

१. 'तु सु' ङ, 'न्तः सु' ख. पाठः. २. 'नैव पू' ख. ग. पाठः.
३. 'ह्यः सु' ग. पाठः. ४. 'मे' क. पाठः.

शयानासीनतिष्ठन्तो गच्छन् पूर्वे च योगिनः ।
भूमीनां देवता ज्ञेया दिक्कोणस्थास्ततोऽपराः ॥ ५७ ॥
वराहो नारसिंहश्च श्रीधरश्च हयाननः ।
जामदग्न्यश्च रामश्च वामनः कृष्ण एव च ॥ ५८ ॥
तत ऊर्ध्वे चतुर्दिक्षु वैनतेयं प्रकल्पयेत् ।
मध्ये ब्रह्मा शिवोऽन्ते स्यात् कलशे तु स्वयं हरिः ॥ ५९ ॥
कलशान्ते महाविष्णुः सदाविष्णुस्तदग्रतः ।
ज्ञातव्या गृहगर्भार्चाः स्थूलसूक्ष्मपरात्मिकाः ॥ ६० ॥
अनन्तं पादुकं विद्यादात्मतत्त्वेश्वरं प्रभुम् ।
विद्यातत्त्वमधिष्ठानमित ऊर्ध्वं परं तथा ॥ ६१ ॥
वेद्यामिन्द्रादयो दिक्स्था विष्वक्सेनः प्रणालके ।
पादुकाद्यङ्घ्रिजङ्घोरु पट्टिकान्तं प्रतिः कटिः ॥ ६२ ॥
मेखला रशना कुक्षिर्गर्भः स्तम्भाश्च बाहवः ।
मध्यं नाभिश्च हृत् पीठमपानं जलनिर्गमः ॥ ६३ ॥
पादाधारस्त्वहंकारः पिण्डिका बुद्धिरुच्यते ।
तदन्ते[2] प्रकृतिः पद्मं प्रतिमा पुरुषः स्मृतः ॥ ६४ ॥
घण्टा जिह्वा मनो दीपो दारु स्नायुः शिलास्थि च ।
त्वक् सुधा लेपनं मांसं रुधिरं तत्र यो रसः ॥ ६५ ॥
चक्षुः शिखरपार्श्वे तु ध्वजाग्रं च शिखा भवेत् ।
तलकुम्भो भवेत् पाणिर्द्वारं प्रजननं स्मृतम् ॥ ६६ ॥
शुकनासैव नासोक्ता गवाक्षं श्रवणं विदुः ।
कपोतालिं तथा स्कन्धं कण्ठं चामलसारकम् ॥ ६७ ॥

१, 'म' ख. ग. घ. ङ. पाठः. २. 'न्तं' ख. ग. पाठः.

घटं शिरो घृतं मज्जा वाङ् मन्त्रैः सेचनं पयः ।
नामशैत्यादिवर्णान्नधूपेषु विषयाः स्थिताः ॥ ६८ ॥
रन्ध्रे वातायने धाम्नि लेपे स्थैर्ये च खादयः ।
पर्वाणि सन्धयो ज्ञेया लोहबन्धास्तथा नखाः ॥ ६९ ॥
केशरोमाणि चैवास्य विज्ञेया दुग्धकूर्चकाः ।
प्रासादपादमात्रोच्चः प्राकारः परितो भवेत् ॥ ७० ॥
गोपुरं पादहीनोच्चं तत्समं मण्डपं विदुः ।
पीठद्विगुणविस्तारो गरुडस्य च मण्डपः ॥ ७१ ॥
तावन्तो लोकपालानां विष्वक्सेनस्य चालयाः ।
पृष्ठेऽनन्तस्य चाग्नेय्यां हविश्शाला च तावती ॥ ७२ ॥
मातॄणामालयाः कार्या दक्षिणे चोत्तरे तथा ।
इन्द्राग्नीशगताः कार्याः सर्वे प्रत्यङ्मुखा गृहाः ॥ ७३ ॥
रक्षोवरुणवायव्यगताश्च प्राङ्मुखास्तथा ।
दक्षिणोत्तरयोः कार्याः प्रासादाभिमुखा यथा ॥ ७४ ॥
तुषहीनैरनुत्तानैरष्टभिर्मध्यमैर्यवैः ।
उत्तमं सप्तभिर्मध्यमधमं षड्भिरङ्गुलम् ॥ ७५ ॥
गायत्र्यक्षरसंख्यातैरङ्गुलैरेव साधितः ।
यो हस्तस्तेन मातव्यं सर्वं त्रिविधमिष्यते ॥ ७६ ॥
शिलाभिरिष्टिकाभिर्वा काष्ठैर्वा मृद्भिरेव वा ।
कुर्यात् प्रासादविस्तारं सदोषं तु विवर्जयेत् ॥ ७७ ॥
वृद्धां बालां च चण्डालीं गर्भिणीं दुष्टभूमिजाम् ।
शिलां त्यक्त्वा शुभामन्यां गृह्णीयाद् वर्णयोगतः ॥ ७८ ॥

१, 'न्त्रं' ख. ग. पाठः. २. 'धा' ख. ग. पाठः.

पुल्लिङ्गे प्रतिमा प्रोक्ता स्त्रीलिङ्गे पीठिका स्मृता ।
रत्नन्यासादधस्तात्तु नपुंसकशिलेष्यते ॥ ७९ ॥
कार्या गृहानुरूपार्चा गृहं वार्चानुरूपतः ।
न्यायोऽयं पीठिकादीनामपि ज्ञेयो विचक्षणैः ॥ ८० ॥
न जीर्णैरुपयुक्तैर्वा शिलाद्यैर्वैष्णवं गृहम् ।
कारयेत् पीठिकां वार्चामभिचारोऽन्यथा भवेत् ॥ ८१ ॥
पुरातन्यो विवर्णाः स्युरपक्वाश्चात्र नेष्टकाः ।
गर्भवन्तः स्वयं शुष्काः पतिता वाग्निदूषिताः ॥ ८२ ॥
असारा दुष्टदेशस्था दूषिताश्चापि न द्रुमाः ।
कटुकण्टकिपैशाचक्षुद्रचैत्यादयस्तथा ॥ ८३ ॥
शूलसूचिध्वजस्तम्भचक्रयष्टिकृतानि च ।
न युञ्ज्याच्छास्त्रविद् गेहे नोत्तमं योजयेदधः ॥ ८४ ॥
घटीयन्त्रादिदारूणि न कपित्थाक्षजानि च ।
वाहयेन्मूलमग्रेण नोत्तमं सन्धयेन्नरे ॥ ८५ ॥
नाधोमुखं नियुञ्जीत न तथा दक्षिणामुखम् ।
अनुयागे नवाद्ब्येत्र द्रव्याणि शुभदानि तु ॥ ८६ ॥
प्रासादेऽधःशिलादीनि शुभान्यन्यानि वेच्छया ।
यदार्चोत्पाटिता स्थाप्या तदा पूर्वैव पीठिका ॥ ८७ ॥

इति विष्णुसंहितायां त्रयोदशः पटलः ॥

---

१. 'पसंयुक्तैः शि' ख. ग. पाठः. २. 'क्षाः' ख. पाठः. ३. 'णि' क. ख. ग. पाठः. ४. 'चो' ख. ग. पाठः. ५. 'यां प्रासादविधिस्त्रयोदशः ।' घ. ङ. पाठः.

## अथ चतुर्दशः पटलः ।

*अथ वक्ष्यामि संक्षेपात् प्रतिमालक्षणं परम ।
योनिसंस्थानभेदं च साधकानां हिताय वै ॥ १ ॥
रत्नलोहशिलाधातुमृत्काष्ठालेख्यभेदतः ।
प्रतिमा सप्तधा ज्ञेया निर्दोषा रत्नलोहजा ॥ २ ॥
बहुदोषा शिला सा तु पुण्यशैलोद्भवेष्यते ।
वारुण्यैन्द्री तथाग्नेयी वायवी भूश्चतुर्विधा ॥ ३ ॥
आद्ययोर्या शिला सैषा निर्दोषापि तु नान्ययोः ।
निमग्ना भुवि या रम्या स्निग्धार्ककिरणोज्झिता ॥ ४ ॥
एकवर्णा सुवर्णा च सवर्णा चातिशोभना ।
श्वेताब्जाभा मृगे ग्राह्या सौम्या विप्रस्य सा शिला ॥
ऐन्द्री रक्ता कुलस्थाभा ज्येष्ठायां क्षत्रियस्य तु ।
फल्गुन्यां भगदेवत्या पीता वा हरिता विशः ॥ ६ ॥
कृष्णा मुद्गनिभाश्विन्यां शूद्रस्यैवाश्विदेवता ।
विशाला नातिबहला छिद्रवन्मधुरस्वरा ॥ ७ ॥
रम्भादलाकृतिः स्त्री स्याच्छीतला च मनोरमा ।
गम्भीरनिनदा गुर्वी सुदृढा विस्फुलिङ्गिनी ॥ ८ ॥
अश्वत्थवटपत्राभा विशाला बहला पुमान् ।
नपुंसकं द्वयाकारो तद्धीना या सपर्पटा ॥ ९ ॥
निबिडावयवा स्निग्धा धीरशब्दा सुशीतला ।
सुगन्धरसरूपाढ्या युवतिः सा सुशोभना ॥ १० ॥

---

१. 'सेष्टा नि' ख. ग. ङ. पाठः. २. 'रं' ग. पाठः. ३. 'सुखरूप' रसाढ्याया यु' ख., 'गन्धरूपरसाढ्या या यु' क. पाठः. ४. 'ती' ख. ग. ङ. पाठः. ५. 'तु' ख. ग., 'ति' ङ. पाठः.

* अयं पटलः समनन्तरपटलानन्तरं घ. पाठे पठ्यते ।

बाला शस्त्रासहा मृद्वी पिच्छिला पल्लवास्थिरा ;
चण्डाली शुल्किनी वा स्याद् यस्यां न रमते मनः ॥ ११॥
सा हि मण्डूकखण्डा च वृद्धा रूक्षातिझर्झरा ।
बहुवर्णातिनीला च धूम्रा च स्थूलरोमिका ॥ १२ ॥
हीनस्वना च निन्द्याङ्गी सोष्णा चण्डालिका स्मृता ।
वल्मीकवृक्षसंलैग्ना वह्निवातातपाहता ॥ १३ ॥
चितिचैत्यसमीपस्था बाह्यालीढान्त्यसेविता ।
ग्रहजुष्टा विवर्णा च चत्वरान्तर्जलोषिता ॥ १४ ॥
कल्पितान्यत्र शिष्टा च संस्कृता येनकेनचित् ।
सगर्भमण्डलच्छिद्रसन्धिकीलकजालका ॥ १५ ॥
स्फोटावर्तसिराग्रन्थिभेदयुक्ता च वर्जिता ।
हीनरेखोत्तमा हीना हीना रेखोत्तमोत्तमा ॥ १६ ॥
शिलासवर्णा[3] रेखाः स्युः सुवर्णाश्चातिशोभनाः ।
इन्द्रायुधपताकोर्मिकलशाभा मनोरमा[4] ॥ १७ ॥
सदा वृद्धिकरी ज्ञेया गोब्राह्मणहितावहा ।
श्रीवत्सशङ्खचक्राब्जनन्द्यावर्तप्रदक्षिणा ॥ १८ ॥
तोरणच्छत्रवस्त्रोक्षकन्यास्रक्कुसुमोपमा ।
प्रासादस्वस्तिकाश्वेभवर्धनी शफरोपमा ॥ १९ ॥
रथेक्षणाङ्गुलीकूर्मचामराङ्कुशकेसरी ।
रत्नाभरणगोवृक्षपैत्रचन्द्रार्कतारकाः ॥ २० ॥

---

१. 'रा' ङ. पाठः. २. 'म' क. पाठः. ३. 'र्णरेखा तु सुवर्णा चातिशोभना ।' क. ख. घ. पाठः. ४. 'माः' च. पाठः. ५. 'चक्राच' ख. ग. पाठः.

पवित्रकुण्डिकादर्शमृगहंसादयः शुभाः ।
एकाद्विबहुविच्छेदे[1] पुत्रेशगृहिणीक्षयः ॥ २१ ॥
वक्रस्थूलकृशा रूक्षाश्छिन्नाग्राश्च न शोभनाः ।
सङ्कीर्णा बहुवर्णा च यस्यां नेष्टा च सा शिला ॥ २२ ॥
अ वृद्धिकृदि शत्रुघ्नमु[2] संवृतमशोभनम् ।
सन्ध्यक्षरेषु वृद्धिः स्यात् कादिमान्तेषु सम्पदः ॥ २३ ॥
*यायोगवाहेषूच्चाटो रादौ भीपुष्टिशान्तयः ।
सिद्धिरूष्मसु[3] मोक्षोऽन्त्ये तिर्यग्रेखास्त्वशोभनाः ॥ २४ ॥
सगर्भोद्धाट्यमाना या भिद्यते शिथिलध्वनिः ।
मण्डलादियुतोष्णा वा विवर्णा वापि तां त्यजेत् ॥ २५ ॥
शिलायां क्षालितायां तु यदि किञ्चिन्न लक्ष्यते ।
मध्यमा सा शिला ज्ञेया हीना युक्ता शुभाशुभैः ॥
ध्वनिर्घण्टानिभो यत्र स्फुलिङ्गाश्छेदने सदा ।
दृश्यन्ते[4] ताच्छिरस्तस्याः पृष्ठमूर्ध्वमधोमुखम् ॥ २७ ॥
द्विजो[5] वा शिल्पिनो[6] कन्या यद् ब्रूयादधिवासिता ।
तच्छिरः स्यात् ततो वक्रं कल्पयेदविकल्पितम् ॥ २८ ॥
प्राक्पश्चिमशिरा ग्राह्या प्राक्प्रत्यग्द्वारवेश्मनोः ।
अलाभे याम्यसौम्याग्रा कोणाग्रा तु न शस्यते ॥ २९ ॥
स्थण्डिले देवमिष्ट्वादौ[7] ब्राह्मणैः स्वस्ति वाचयेत् ।
सुदिने प्राश्य दध्यन्नं रक्षामङ्गलपूर्वकम् ॥ ३० ॥

१. 'भां' ख. ग. पाठः. २. 'म' क. ख. ग. पाठः. ३. 'सन्धिरू' क. घ. पाठः. ४. 'ते' ख. ग. पाठः. ५. 'जं' क. ख. ग, 'जा' ङ. पाठः. ६. 'नः' च. पाठः. ७. 'ष्ट्वा' क. पाठः.

* अयोगवाहौ बिन्दुविसर्गौ ।

शस्त्राण्यस्त्रेण सम्पूज्य शोभनान्यभिधाय च।
अयःकूटादि सङ्गृह्य प्राङ्मुखो वाप्युदङ्मुखः॥ ३१ ॥
मङ्गलानि च सन्दृश्य निमित्तानि परीक्ष्य च।
प्रतिमार्थं तु निर्गच्छेदाचार्यः शिल्पिभिः सह ॥ ३२ ॥
विद्याराज्ञीं सदा ध्यायन्नग्रतोऽर्घ्यकरः स्थितः।
निमित्तैः शोभनैर्गच्छेत् कृत्वैवं पुनरन्यथा ॥ ३३ ॥
निर्गतस्तु शिलां पश्येत् तदाप्रभृति नित्यशः।
प्रतिमां कारयेत् कर्ता तत्कर्मान्तं हविष्यभुक् ॥ ३४ ॥
सोमेशेन्द्रेषु न स्याच्चेत् तादृशी शोभना शिला।
सिद्धं शिलाकरं गच्छेत् कृत्वा दिग्यजनं पुनः ॥ ३५ ॥
दिशो विरोच्य[2] चास्त्रेण रक्षामङ्गलपूर्वकम्।
तत्राधिवासनं कुर्यादाचार्यः प्रयतो निशि ॥ ३६ ॥
शिलाया मण्डपं कृत्वा परिश्रित्य समन्ततः।
चतुर्दिक्षु पताकाभिश्चतुर्वर्णाभिरन्वितम् ॥ ३७ ॥
इष्ट्वा हरिं च दिग्देवान् भूतक्रूरबलिं हरेत्।
देवाग्रे दर्भशय्यायामुपोष्य नियतेन्द्रियः॥ ३८ ॥
आचार्यः सुस्थितो विष्णुं ध्यात्वा मन्त्रमुदीरयेत्।
नमः सकललोकाय विष्णवे प्रभविष्णवे ॥ ३९ ॥
विश्वाय विश्वरूपाय स्वप्नाधिपतये नमः।
तेनाष्टशतजप्तेन ततः स्वप्नं स पश्यति ॥ ४० ॥
शोभनं स्याच्छुभे स्वप्ने कर्तव्या शान्तिरन्यथा।
शोभनां तु शिलां ज्ञात्वा वर्णं लिङ्गं शिरस्तथा ॥ ४१ ॥

---

१. 'र्घ्यां' ख. ग. पाठः. २. 'लोक्य चा' क. ख, घ., ङ. पाठः.

उद्बुध्यस्वेति मन्त्रेण लाञ्छयेत् तत्र तत्र तु ।
आचार्योऽस्त्रेण कृत्वैवं शिल्पिभिर्ग्राहयेत् ततः ॥ ४२ ॥
देवमिष्ट्वा बलिं दत्त्वा कृत्वाथ स्वस्तिवाचनम् ।
शिलां रथे समारोप्य प्रयत्नादानयेत् ततः ॥ ४३ ॥
रथशिल्पिविकारादौ शतमस्त्रेण होमयेत् ।
ध्वजादिघोषैः पर्येत्य शालायामुत्तरे न्यसेत् ॥ ४४ ॥
संकल्प्य प्रतिमामेकां शिलायां वृक्ष एव वा ।
नान्यां तु प्रतिमां कुर्यात् कृता भवति निष्फला ॥ ४५ ॥
स्वयमुत्पादिता मुख्या क्रीता द्रव्यैस्तु मध्यमा ।
विदितावयवैः शुद्धा या ह्रदादिषु साधमा ॥ ४६ ॥
शिलायामिव संस्कारः कर्तव्यो दारुकर्मणि ।
दारुचन्दनशम्य कमधूकासनबिल्वकाः ॥ ४७ ॥
सरलः स्पन्दनः सालः स्तबकः स्तम्भकरितमिः ।
वरणस्तिन्दुकाशोकपर्णीपनसशिंशपाः ॥ ४८ ॥
अन्येऽपि याज्ञिका वृक्षाः सारवन्तश्च शोभनाः ।
ऋजुः स्निग्धः समोऽशाखः शुभदेशोद्भवो घनः ॥ ४९ ॥
अगर्भव्रणरन्ध्रादिर्दृढमूलः शुभो मतः ।
दक्षिणप्रवणः शुष्को दग्धः पक्षिग्रहाश्रयः ॥ ५० ॥
पतितश्चैत्यवल्मीकचितादिस्थश्च नेष्यते ।
अधोभागं तु संशोध्य दर्भानास्तीर्य सर्वतः ॥ ५१ ॥
गायत्रीपरिपूतेन सर्वतः प्रोक्ष्य वारिणा ।
हुत्वानेनैव मन्त्रेण क्षीरवृक्षसमिच्छतम् ॥ ५२ ॥

यत्परं वैष्णवं तत्त्वं यच्च भागवतं पुनः ।
तत्सर्वमेकसंलीनमस्मिन् देहे विबुध्यताम् ॥ ५३ ॥
धर्मं पुण्यं तथा सत्यं सर्वमेकत्र वर्तताम् ।
वृक्ष! लोकस्य शान्त्यर्थं गच्छ देवालयं शुभम् ॥ ५४ ॥
देवत्वं यास्यसे तत्र दाहच्छेदविवर्जितम् ।
जलपुष्पप्रदानेन सधूपैर्बलिभिस्तथा ॥ ५५ ॥
लोकास्त्वां पूजयिष्यन्ति ततो यास्यसि निर्वृतिम् ।
गन्धपुष्पैश्च संपूज्य बलिं दत्त्वा च पूर्ववत् ॥ ५६ ॥
स्वप्नं दृष्ट्वा द्विजायोक्त्वा शोभनान्यभिधाय च ।
पूर्वोत्तरमुखो मन्त्री जप्त्वेदंविष्णुरित्यृचम् ॥ ५७ ॥
मध्वाज्याक्तकुठारेण स्मृत्वास्त्रं छेत्तुमारभेत् ।
दिशा वारेभिरेत्येवं पातं तस्य समुद्धरेत् ॥ ५८ ।
सोमेन्द्रेशेषु तत्पातः शुभोऽन्यत्र न शस्यते ।
भग्नेऽस्मिन् कारयेच्छान्तिं महाव्याहृतिहोमतः ॥ ५९ ॥
अग्नआयाहिमन्त्रेण पतितं शोधयेद् द्रुमम् ।
चतुरश्रं ततः कृत्वा रथेनाश्मवदानयेत् ॥ ६० ॥
मृत्तिकाप्येवमानेया सवर्णा दोषवर्जिता ।
पुण्यादायतनाद् रम्यादुद्धृतासीति चाहृता ॥ ६१ ॥
अपक्वं पार्थिवं शस्तं पक्वमत्र विगर्हितम् ।
कपिलाज्यातसीतैलकषायैश्चूर्णसंयुताम् ॥ ६२ ॥
श्रीवेष्टकादिसंयुक्तां पेषयित्वा पुनःपुनः ।
मासपक्षोषितां कृत्वा कारयेत् प्रतिमां ततः ॥ ६३ ॥

१. 'या' क. पाठः.

संस्कृतं प्रतिमाशूलमधिवास्याग्रमण्डपे ।
रत्नन्यासं पुरा कृत्वा मुहूर्ते स्थापयेद् गुरुः ॥ ६४ ॥
लोहे सिक्थमयीमर्चां कारयित्वा मृदावृताम् ।
सुवर्णादीनि संशोध्य विद्राव्याङ्गारवत् पुनः ॥ ६५ ॥
कुशलैः कारयेद् यत्नात् सम्पूर्णां सर्वतोघनाम् ।
पुष्टिदार्चा तु सौवर्णी राजती कीर्त्तिदा स्मृता ॥ ६६ ॥
ताम्रजा धनपुत्रार्था मणिजा सुखदा[1] भवेत् ।
दारुजा श्रीकरी ज्ञेया मृन्मयी सर्वकामदा ॥ ६७ ॥
एकबेरं[2] शिलालोहरत्नधातुमयं भवेत् ।
बहुबेरं[3] तु मृद्दारुकृतमालेख्यमेव च ॥ ६८ ॥
प्रासाद एव तु स्थाप्या या शिलादारुमृन्मयी ।
प्रतिमान्या गृहे पूज्या[4] प्रासादे च यथाविधि ॥ ६९ ॥
अङ्गुष्ठादिवितस्त्यन्तं गृहे संस्थाप्य पूजयेत् ।
प्रासादे चोर्ध्वमाहस्तात् परं प्रासाद एव तु ॥ ७० ॥
जङ्गमं पूजयेन्नित्यमावाहनविसर्गतः ।
नावाहनविसर्गाभ्यामेकबेरं[5] प्रतिष्ठितम् ॥ ७१ ॥
कर्मार्चां लोहजां कृत्वा पादमात्रां शुभाननाम् ।
मूलानुरूपसंस्थानां शोधयित्वा यथाविधिं ॥ ७२ ॥
तस्यामावाह्य सम्पूज्य लेप्यादौ विसृजेत् पुनः ।
द्वारोच्चेऽष्टांशहीने स्यात् त्रिभक्तेऽर्चा[6] द्विभागिका ॥ ७३ ॥

---

१. 'सुदा' ख. ग. पाठः. २., ३. 'वी' ख. ग. ङ. पाठः. ४. 'यो' ख ग. पाठः. ५. 'विनावाहविस' क. ख. ग. ङ. पाठः. ६. 'च्चेद् द्वि' ख. ग. पाठः.

नवांशोने समस्ते वा पादोना वापि तत्समा ।
उत्तमं पार्थिवे मानं दारवे मध्यमं भवेत् ॥ ७४ ॥
मणिजे चाधमं ज्ञेयमिच्छयान्यत्र कल्पयेत् ।
उत्तमा दशतालार्चा नवताला तु मध्यमा ॥ ७५ ॥
अष्टतालाधमा ज्ञेया देव्यः स्युश्चाष्टतालिकाः ।
दशधा नवधा चेष्टं मानं कृत्वैकमंशकम् ॥ ७६ ॥
भङ्क्त्वा द्वादशधा ज्ञेयं स्वाङ्गुलं येन मीयते ।
ग्रीवाहृन्नाभिमेढ्रान्त मुखमानेन कल्पयेत् ॥ ७७ ॥
तद् भङ्क्त्वा मूर्ध्नि कण्ठाङ्घ्रिजानुदेशे समं न्यसेत् ।
जङ्घोरू द्विगुणौ कार्यौ बाहू चाजानुलम्बिनौ ॥ ७८ ॥
किञ्चिदूनाः प्रमाणेन ज्ञेयाश्चैवोपबाहवः ।
किरीटमधिकं कुर्यात् पद्मं नालं च मानतः ॥ ७९ ॥
तिर्यक् षोडशसूत्राणि सप्तोर्ध्वानि च कल्पयेत् ।
तिर्यगूर्ध्वगतैः सूत्रैर्मुखे द्वादशधा कृते ॥ ८० ॥
केशपञ्चमसूत्रस्थं मध्यैकान्तरितं द्वयोः ।
पदयोरक्षिणी कार्ये पदमानेन विस्तृते ॥ ८१ ॥
तयोर्मध्ये शुभा नासा कार्याक्षिद्विगुणायता ।
तारे सृक्वान्तसूत्रस्थे कंबीरौ पुटसंमितौ ॥ ८२ ॥
कुर्याद् भ्रूसूत्रगौ कर्णौ नेत्रे नेत्रान्तरायते ।
तारके तत्रिभागस्थे ज्योतिषी तत्रिभागतः ॥ ८३ ॥
नेत्रवन्नासिकाग्रोच्चं निम्नं मूलं तदर्धतः ।
निष्पावाभौ[1] निम्नपुटौ भ्रूमध्यं नेत्रमध्यवत् ॥ ८४ ॥

१. 'पुटा निष्पावबीजाभौ भ्रू' क. पाठः.

अधरस्तत्समोऽन्योष्ठगोजिकामानमंर्धतः ।
कर्णायामस्तु नासावद् विस्तारश्च तदग्रवत् ॥ ८५ ॥
तुटुकौ नेत्रसूत्रस्थौ तद्विस्तारेण सम्मितौ ।
ललाटकण्ठविस्तारो नासिकाद्विगुणो मतः ॥ ८६ ॥
चिबुकौ[1] कर्णमूलात्[2] तु नासिकाद्विगुर्णायता[3] ।
स्तनान्तरं मुखं विद्याद् द्विगुणं चैव कक्षयोः ॥ ८७ ॥
कण्ठाद्[4] द्विगुण एवेष्टो नाभिदेशे तु विस्तरः ।
कटौ नेत्राधिकस्त्र्यंशं स्तनकक्षान्तरं विदुः ॥ ८८ ॥
तावत् कक्षांसमध्यं च कारयेत् स्कन्धमुन्नतम् ।
कटिवत् सन्धिकक्षान्तं प्रकोष्ठं नासिकाधिकम् ॥ ८९ ॥
तत्र मध्यमयोर्मानं नासिकाधरयोगतः ।
कल्पयेदर्धपर्वोने तथा तर्जन्यनामिके ॥ ९० ॥
तयोरप्यर्धपर्वोने तथाङ्गुष्ठकनिष्ठिके ।
तले नेत्राधिकायामे मध्यमायामविस्तरे ॥ ९१ ॥
तत्राङ्गुष्ठप्रदेशिन्योर्नेत्रसम्मितमन्तरम् ।
अन्तरं मध्यमातुल्यं कनिष्ठामणिबन्धयोः ॥ ९२ ॥
मणिबन्धस्तु नासावत् ततोऽङ्गुष्ठान्तरं तथा ।
द्विगुणो बाहुविस्तारो नेत्रोनं चैव कोर्परे ॥ ९३ ॥
सर्वत्र त्रिगुणोनाहो बाहू गोपुच्छवच्छुभौ ।
मध्यमापर्वणी पूर्वे समे शेषं तदर्धकम् ॥ ९४ ॥

---

१. 'कौ' ख. ग. पाठः. २. 'र्णयोर्मध्यं कण्ठं सा नेत्रसम्मिता । स्तना' ङ. पाठः. ३. 'न्तं ना', ४. 'णो मतः ।' ख. ग. पाठः. 'ण्ठाद्' च. पाठः.

अष्टांशोनानि पर्वाणि ततो देशिन्यनामयोः ।
पादोनानि कनीयस्या योक्तव्यान्यनुरूपतः ॥ ९५ ॥
तर्जनीमध्यमापर्वसमे चाङ्गुष्ठपर्वणी ।
सर्वाङ्गुलीषु कार्याः स्युरग्रपर्वार्धतो नखाः ॥ ९६ ॥
नाहोऽङ्गुष्ठस्य नासावदष्टांशोनस्ततोऽन्ययोः ।
ततश्चैवं कनिष्ठायां[1] वृत्ते भुजसमे स्फिजौ ॥ ९७ ॥
ऊरू मुखवदक्ष्यूनं जानु जङ्घा मुखार्धतः ।
मुखायततलौ पादौ पुरस्ताज्जङ्घया समौ ॥ ९८ ॥
कूर्मोन्नतौ[2] क्रमोनोच्चौ[3] तत्राङ्गुष्ठौ तदर्धकौ ।
प्रदेशिन्यौ च तत्तुल्ये हीनाः शेषा नखान्नखम् ॥ ९९ ॥
अनङ्गुष्ठास्त्रिपर्वाणो नखा रक्तार्धचन्द्रवत् ।
नाहोऽङ्गुष्ठेऽन्यमध्यावत् तर्जन्यङ्गुष्ठदैर्घ्यवत् ॥ १०० ॥
अष्टांशोनाः क्रमादन्याः कारयेदनुरूपतः ।
कर्णपाशौ च केशाश्च भूषावस्त्रायुधानि च ॥ १०१ ॥
सन्निवेशाश्च योक्तव्या यथाशोभं विजानता ।
विशालधवलाताम्रे पक्ष्मले चैव लोचने ॥ १०२ ॥
साधारणीव दृष्टिः स्यात् पश्यतां नाधऊर्ध्वगा ।
पटे वा लेखयित्वैवं तं पटं साधकः स्वयम् ॥ १०३ ॥
एकान्ते तु प्रतिष्ठाप्य पूजयेन्नित्यमादरात् ।
बिम्बोच्चार्धं तु पीठोच्चमायामो बिम्बमानतः ॥ १०४ ॥

---

१. 'यां' ख. ग. पाठः. २. 'पमौ क्र' ङ. पाठः. ३. 'मादुच्चौ' ख. ग., 'मान्नोच्चौ' ङ. पाठः.

केशान्तमुखमानो वा पद्मतुल्यो जलाश्रयः ।
नाधिकं पीठमिष्टं तु जङ्गमस्य षडङ्गुलात् ॥ १०५ ॥
अङ्गुलाभ्यां नच न्यूनं लोहजस्यैकयोनिकम् ।
शैलमन्यत्र विज्ञेयं रत्नजानां तु लोहजम् ॥ १०६ ॥

इति[1] विष्णुसंहितायां[2] चतुर्दशः पटलः ॥

---

अथ पञ्चदशः पटलः ।

अथ वक्ष्यामि संक्षेपात् प्रतिष्ठापञ्चकं क्रमात् ।
परमेष्ठ्यादिभिर्मन्त्रैः कर्तव्यं तु विशेषतः ॥ १ ॥
स्थापनास्थापना चैव तथा संस्थापना पुनः ।
प्रस्थापना च पञ्चोक्ताः प्रतिष्ठापनया सह ॥ २ ॥
स्थितासीनशयानानां यानगस्य चलस्य च ।
या क्रिया पञ्चधा प्रोक्ता सा प्रतिष्ठेति कीर्तिता ॥ ३ ॥
स्थाने सौम्या भवेन्मूर्त्तिः सौम्याग्नेयी तथासने ।
आग्नेयी शयनेऽन्यत्र यथाकामं तु कल्पयेत् ॥ ४ ॥
सात्त्विकी राजसी चापि तामसी च य[3]थाक्रमात् ।
सिता रक्तासिता मूर्त्तिः श्यामा सर्वत्र वा भवेत् ॥ ५ ॥
स्थिता तु दैविकी मूर्त्तिः परस्य परमात्मनः ।
किञ्चिन्मानुषसंयुक्ता त्वासीनान्या समोच्यते ॥ ६ ॥
स्थाने तु व्यापको विष्णुर्व्याप्यव्यापक आसने ।
व्याप्यस्तु शयने ज्ञेयः सवनत्रयदेवताः ॥ ७ ॥

---

१. 'ति प्रतिमालक्षणश्चतुर्द' ख. ग. पाठः. २. 'यां पञ्चदशः प्रतिमापट' घ. पाठः. ३. 'त्रिधा क' क. पाठः.

पार्श्वयोर्ब्रह्मरुद्राभ्यामर्केन्दुभ्यां तदन्तिके ।
पृष्ठे श्रिया सरस्वत्या शान्त्या रत्या च पार्श्वयोः ॥ ८ ॥
वराहहयशीर्षाभ्यां तत्पृष्ठे दशभिः स्थितः ।
पार्श्वेऽजभृगुदक्षैश्च रुद्राग्निमनुभिस्तथा ॥ ९ ॥
[1]सनत्कुमारस्कन्दाभ्यां श्रीस्थानस्थितसिद्धिभिः ।
आसीनश्चामरव्यग्रकराभिर्द्वादशावृतः ॥ १० ॥
प्रद्युम्नेनानिरुद्धेन नाभिपद्मस्थितेन च ।
पञ्चभिः शयितोऽग्रस्थमार्कण्डेयमहायुतः ॥ ११ ॥
त्रिधोक्तानां तु सर्वेषामेषामन्यतमान् क्रमात् ।
यानगस्य परीवारान् यथाकामं प्रकल्पयेत् ॥ १२ ॥
तथा धनुर्गदाचक्रशङ्खासिशरलाङ्गलैः ।
खेटकेन च पद्मेन वृतः साधारणैर्भवेत् ॥ १३ ॥
चतुर्भुजः स्थितो देव आसीनोऽष्टभुजो भवेत् ।
शयानस्येच्छया योज्या भुजाः सर्वत्र वेच्छया ॥ १४ ॥
पञ्चोपनिषदस्त्वेताः सुसूक्ष्मा देवशक्तयः ।
पञ्चतन्मात्रशब्देन कीर्त्तिता वेदवादिभिः ॥ १५ ॥
पञ्चैताः संहता यस्माच्छक्तयः सर्वहेतवः ।
पञ्चभिर्युक्त एवाभिः स सर्गादौ प्रवर्तते ॥ १६ ॥
निग्रहानुग्रहौ चापि करोतीशः स्वतोऽक्रियः ।
स्थापनादिषु सर्वत्र पूर्णैश्वर्यस्तु नान्यथा ॥ १७ ॥
गुणप्रधानतो भेदात् संहतास्वेव शक्तिषु ।
विभागः पञ्चधा ज्ञेयो नैकशः पृथगास्थितेः ॥ १८ ॥

१. 'स्कन्दसनत्कुमाराभ्यां' ख. ग. पाठः.

विचित्रकार्यकरणसम्बन्धो भोगकारणम् ।
इत्यन्ये शक्तयश्चास्य सकार्यकरणास्तथा ॥ १९ ॥
अतः प्रतिष्ठानिपुणैराचार्यैस्तन्त्रपारगैः ।
संहतास्ताः प्रयोक्तव्या बिम्बैश्वर्यप्रसिद्धये ॥ २० ॥
स्थापनादिविभागः स्याद् बिम्बविन्यासजोऽप्यतः ।
प्राधान्यख्यापनार्थैव भेदोक्तिरिति तद्विदः ॥ २१ ॥
पञ्चशक्तिमये सूक्ष्मे देहे साधारणे पुनः ।
मूर्त्तयस्तस्य मूलाङ्गविशेषाद् बहुधा स्मृताः ॥ २२ ॥
वृत्तायते च प्रासादे चतुरश्रायते तु वा ।
स्थाप्यं शयनमन्यत्र स्थितासीनक्रियासत्रः ॥ २३ ॥
यत्र वा तत्र वा काले प्रतिष्ठा मुक्तये कृता ।
उत्तरे त्वयने कार्या शुक्लपक्षे च मुक्तये ॥ २४ ॥
पुनर्वस्वश्विनीश्रोणापुष्यहस्तोत्तरत्रये ।
रेवतीरोहिणीस्वातीभरणीषु च शस्यते ॥ २५ ॥
प्रतिपच्च द्वितीया च पञ्चमी च त्रयोदशी ।
दशमी पौर्णमासी च द्वादशी तिथयस्त्विमाः ॥ २६ ॥
सोमो बृहस्पतिश्चैव भार्गवोऽथ बुधस्तथा ।
एते सौम्यग्रहा योज्या वारोदयनिरीक्षणैः ॥ २७ ॥
सप्तमान्नवमाद् वापि प्रागेव स्याच्छुभेऽहनि ।
पञ्चमाद् वाङ्कुरारोपस्त्रिकालोक्षार्चनान्वितः ॥ २८ ॥
त्रिविधं पात्रमुद्दिष्टं मङ्गलाङ्कुररोपणे ।
पालिका घटिका चैव शरावश्चेति भेदतः ॥ २९ ॥

१. 'तल्लिङ्ग' . पाठः.

विष्णुब्रह्मशिवाधीशा निर्दोषाः सर्वकर्मसु ।
प्रत्येकं द्वादश ग्राह्याः पालिकाः षोडशैव वा ॥ ३० ॥
पञ्चविंशाङ्गुलोच्चास्तास्तद्वक्त्रं षोडशाङ्गुलम् ।
षडङ्गुलं चतुष्कोच्चं पीठं तत्सन्धिरङ्गुलम् ॥ ३१ ॥
घटिकामानमङ्गुल्यः षोडश द्वादशैव वा ।
पञ्च वक्त्राणि दिक्षूर्ध्वं मितानि चतुरङ्गुलैः ॥ ३२ ॥
पालिकापीठवत् पीठं नालं तु चतुरङ्गुलम् ।
तालस्योच्चं शरावं तु चतुरङ्गुलपीठकम् ॥ ३३ ॥
त्रिपङ्क्तीकृत्य पात्राणि सुगुप्ते स्थान उत्तरे ।
अग्न्यादीशानपर्यन्तं स्थापयित्वा प्रयत्नतः ॥ ३४ ॥
मृद्वालुकाकरीषैस्तु पूरितान्युत्तरोत्तरम् ।
दूर्वादिभिरलंकृत्य धान्यकूर्चस्थितानि च ॥ ३५ ॥
यवमुद्गतिलव्रीहिमाषशिम्बकुलुत्थकान् ।
प्रियङ्गुसर्षपश्यामराजमाषाढकीयुतान् ॥ ३६ ॥
द्वादशाक्षरमन्त्रेण क्षालयेच्च शुभानिमान् ।
पुण्याहं वाचयित्वादौ ब्राह्मणैः स्वस्ति वाच्य च ॥
अष्टाक्षरेण बीजानि क्रमात् तेषु विनिक्षिपेत् ।
प्रादक्षिण्येन पूर्वोक्तक्रमादवहितो[2] गुरुः ॥ ३८ ॥
जितं ते पुण्डरीकाक्ष! नमस्ते विश्वभावन! ।
सुब्रह्मण्य! नमस्तेऽस्तु नमः पुरुष! पूर्वज! ॥ ३९ ॥
त्रितारकनमोऽन्तेन तेनैवं सवनत्रये ।
कूर्चपाणिः क्रमात् सिञ्चेद् गन्धहारिद्रवारिणा[1] ॥ ४० ॥

१. 'च्छुद्धवारिणा' । च. पाठः. २. 'भि' ख. ग. पाठः.

देवतानामभिस्तानि गन्धपुष्पैश्च पूजयेत् ।
पात्राणां देवताः प्रोक्ता बीजानामधुना शृणु ॥ ४१ ॥
यवसर्षपमुद्गेषु ब्रह्मा रुद्रो हरिः क्रमात् ।
वायुः पूज्यस्तु निष्पावे स्कन्दश्चैव प्रियङ्गुके ॥ ४२ ॥
माषेष्विन्द्रः कुलत्थेऽग्निः शालिष्वर्को यमस्तिले ।
वरुणो राजमाषे श्रीराढक्यां श्यामगः शशी ॥ ४३ ॥
मण्डलेषु सकूर्चेषु पूजयित्वाष्टदिक्क्रमात् ।
रात्रीशेभ्यो बलिं दद्यात् पार्षदान्तं जलान्वितम् ॥
पललं रजनीचूर्णं सलाजं दधिसक्तुकम्[1] ।
भूतक्रूरबलिं दद्यात् पूर्वं भूतप्रहर्षणम् ॥ ४५ ॥
द्वितीयं पैतृकं चैव दद्यात् सातिलतण्डुलैम्[2] ।
धानोडुम्बिकलाजैस्तु ततो यक्षबलिं हरेत् ॥ ४६ ॥
नालिकेरपयस्सक्तुशालिपिष्टविमिश्रितम् ।
चतुर्थे[3] निशि वै दद्यात् ततो नागबलिं बुधः ॥ ४७ ॥
पञ्चमं तु बलिं दद्याद् ब्राह्मं पद्माक्षतैर्युतम् ।
चरुणापूपयुक्तेन षष्ठं शैवबलिं हरेत् ॥ ४८ ॥
गुलान्नं वैष्णवं चैव सप्तमं तदनन्तरम् ।
पायसं कृसरं दद्यादष्टमं नवमं तथा ॥ ४९ ॥
शुद्धवासाः शुचिर्भूत्वा नियतात्मा हविष्यभुक् ।
प्रतिरात्रं बलिं दद्यात् ततः स्नानं समाचरेत् ॥ ५० ॥
प्रातः कर्मदिने दत्त्वा[4] पश्चात् कर्मणि योजयेत् ।
प्रविशेत् गुरुरेवात्र नान्यः कोऽपि कथञ्चन ॥ ५१ ॥

---

१. 'च । भू', २. 'लैः । धा', ३. 'र्थेऽहनि वै' ख. ग. पाठः.
४. 'द्यात् प' क. ख. ग. पाठः.

उच्छिष्टाद्यशुभं सर्वं वर्जयेच्च प्रयत्नतः ।
अदत्त्वा तु बलिं तत्र न कुर्यात् पालिकाक्रियाम् ॥ ५२ ॥
बल्यदाने तु नैष्फल्यात् सर्वथाङ्कुररोपणम् ।
बलिना सह कर्तव्यं प्रयत्नाद् देशिकोत्तमैः ॥ ५३ ॥
मण्डपे स्तम्भमूलेषु धान्ययुक्तेषु विन्यसेत् ।
कर्मारम्भेषु पात्राणि सम्यग्रूढाङ्कुराणि तु ॥ ५४ ॥
श्यामेषु द्रव्यनाशः स्याद् रक्तेषु कलहो ध्रुवम् ।
तिर्यग्गतेषु रोगः स्यादप्ररूढे मृतिर्भवेत् ॥ ५५ ॥
शुभं पीतेषु शुक्लेषु समेपूर्ध्वेष्वृजुष्वपि ।
तस्मात् सर्वप्रयत्नेन सदा रक्ष्याण्यतन्द्रितैः ॥ ५६ ॥
यदाङ्कुराणि रोहन्ति तदाप्रभृति नित्यशः ।
मार्जनं ग्रामवाथीनां कृत्वासिच्य समन्ततः ॥ ५७ ॥
नास्तिकोन्मत्तपाषण्डिपतितादीक्षिताशुचीन् ।
ततो निर्वास्य यत्नेन यागद्रव्याणि संहरेत् ॥ ५८ ॥
प्रासादस्याग्रतः कृत्वा मण्डपं चतुरश्रकम् ।
चतुर्द्वारं वितानादिशोभितं सुपरिच्छदम् ॥ ५९ ॥
तोरणान्यथ चत्वारि पञ्चहस्तोच्छ्रितानि च ।
ध्वजानष्टौ पताकाश्च नवमं तार्क्ष्यलक्षणम् ॥ ६० ॥
प्रासादविस्तरोत्सेधान् दशद्वारायतं ध्वजम् ।
घटा हैमादयो ग्राह्या मार्त्तिका वा नवाः शुभाः ॥ ६१ ॥
लोहजं च महत् पात्रं कुम्भं द्रोणवहं तथा ।
प्रस्थोद्वहानि चत्वारि चरुस्थालीश्च शोभनाः ॥ ६२ ॥

१. 'सर्ववी' ख. ग. पाठः.

आज्यस्थालीं प्रणीतां च समिद्दर्भकुशास्तथा ।
सौवर्णराजते चान्ये पात्रे द्वे प्रसृतोद्वहे ॥ ६३ ॥
अर्घ्याद्यर्थानि चान्यानि लौहान्यब्जनिभानि च ।
आयुधानि तथान्यानि जातिहेममयानि च ॥ ६४ ॥
कूर्मं गरुडमब्जं तु रत्नानि विविधानि च ।
लोहान् धातूंश्च बीजानि दर्वीस्रुवजुहूस्रुचः ॥ ६५ ॥
मृत्तिकाघटिकाः सूत्ररजांसि कुसुमानि च ।
गन्धगुग्गुलुतैलानि दधिक्षीरगुलं मधु ॥ ६६ ॥
गव्यं घृतं च होमार्थं गोमयं मूत्रमेव च ।
कम्बलाजिनखट्वाश्च शयनं च नवं शुभम् ॥ ६७ ॥
उपधानद्वयोपेतं सकपोलस्थलद्वयम् ।
शुक्लास्तरणसंयुक्तं वस्त्राणि विविधानि च ॥ ६८ ॥
सवत्सां कपिलां चैकां हेमशृङ्गीं पयस्विनीम् ।
सुरभीश्च चतस्रोऽन्या दोहनानि शुभानि च ॥ ६९ ॥
कषायार्थास्त्वचश्चैव होमद्रव्याणि सर्वशः ।
भूषणानि च रम्याणि चक्रिकापल्लवांस्तथा ॥ ७० ॥
दूर्वाद्योषधिजातानि फलानि मधुराणि च ।
मूलान्युद्वर्त्तनादीनि हैमं यज्ञोपवीतकम् ॥ ७१ ॥
मङ्गलानि शुभान्यष्टौ कुण्डिकां वर्धनीं तथा ।
शुष्केन्धनानि दीपांश्च सूत्रं धान्यानि तण्डुलान् ॥ ७२ ॥
चतुर्विधं तथा वाद्यं गायकान् नर्त्तकांस्तथा ।
विप्रान् वेदविदः शान्तान् वैष्णवांस्तु विशेषतः ॥ ७३ ॥

१. 'ताश्च' ख. ग. पाठः.

शब्दन्यायनिमित्तज्ञान् प्रयोगज्ञांश्च वैदिकान् ।
मुहूर्त्तज्ञांश्च[1] कालज्ञान् व्रतिनो मन्त्रपाठकान् ॥ ७४ ॥
यतींश्च विमलज्ञानांस्तक्षकांश्च विशेषतः ।
उक्तानुक्तं च यत् सर्वं कार्ये दृष्ट्वा तदाहरेत् ॥ ७५ ॥
यागोपकरणं सर्वं स्थानादि च विशेषतः ।
सर्वं भोगेन दुष्टं स्यात् तस्मात् सर्वं नवं शुभम् ॥ ७६ ॥
मलक्षालनमात्रेणे[2] शुद्धिर्भवति लौकिकी ।
देवपूजासु शास्त्रोक्तं स्नानं[3] स्यात् कायशोधनम् ॥ ७७ ॥
लोकसंव्यवहारेषु धर्मशास्त्रान्तरेषु च ।
विहिताः शुद्धयो ग्राह्या विष्णुभक्तेन धीमता ॥ ७८ ॥
खननादीनि दुष्टायाः शोधनानि विदुर्भुवः ।
शुद्धामपि तु यागार्थं गोमयेनोपलेपयेत् ॥ ७९ ॥
तद् धेनुजं नवं भूस्थं क्षीराद्यपि सुगालितम् ।
घृतं विलीनमुत्पूतं सुगन्धीष्टं विशेषतः ॥ ८० ॥
गां लिप्त्वास्त्रेण संविध्य हस्तं प्रक्षाल्य सम्मृशेत् ।
प्रोक्ष्याक्षतैः ससिद्धार्थैः किरेत् तत् स्थानशोधनम् ॥ ८१ ॥
तोयेन साम्लकल्केन ताम्रं हैमं तु वारिणा ।
राजतं गृहधूमेन पलालाङ्गारकेण वा ॥ ८२ ॥
लोहजं भस्मना शुध्येच्छङ्खादि लवणेन च ।
मृदद्भिः फलपात्राणि दारवाणि तु तक्षणात् ॥ ८३ ॥
पार्थिवानि तु दाहेन नवान्येवाददीत वा ।
लेपगन्धापनोदेन शुद्धिः सर्वस्य कीर्त्तिता ॥ ८४ ॥

१. 'ज्ञान् कलाज्ञांश्च व्र' क. घ. पाठः. २. 'ऽपि' ख. पाठः. ३. 'स्नपनं का' ख. ग. ङ. पाठः.

सकूर्चे गन्धपुष्पाढ्ये जले ताराभिमन्त्रिते।
ध्यात्वा मन्त्रमयं ज्योतिः प्रोक्षणं द्रव्यशोधनम् ॥ ८५ ॥
अक्षाराकलुषं शुद्धं भूरि नद्यादिसम्भवम् ।
सुरसं दुर्जनास्पृश्यमम्भः स्यात् सर्वकर्मसु ॥ ८६ ॥
लौही[1] पात्रवदर्चापि शोध्या चूर्णैस्तु शैलजा ।
शोधनं दारवस्यैवं चित्रस्य मलहानतः[2] ॥ ८७ ॥
मार्जनं मणिजानां तु धातुजानां तु शैलवत् ।
एवं संशोध्य संहृत्य सृष्ट्वाङ्गैः सकलीकृतम् ॥ ८८ ॥
शुध्यत्यस्थावरं बेरं स्थावरं स्नपनादिभिः ।
मार्जनादेव शुध्यन्ति क्षालनाद् वा कुशादयः ॥ ८९ ॥
सदर्भासन आसीनः पूजास्थानादधः सुधीः ।
दर्भपाणिः सकूर्चेन वारिणा मन्त्रतेजसा ॥ ९० ॥
प्रोक्षणाच्छोधयेत् सर्वमात्मानं धारणादिभिः ।
न्यासश्च प्रणवो दर्भाः प्रशस्ता मन्त्रशोधने ॥ ९१ ॥
आवृत्तिगणनं मुद्रा ध्यानं च परिकीर्तितम् ।
सत्यप्रियहितैर्वाचो ज्ञानं तुष्टिश्च चेतसः ॥ ९२ ॥
सर्वेषामपि विज्ञेया भक्तिरेका विशोधिनी ।
स्थलजं करवीरादि जलजं कमलादि च ॥ ९३ ॥
अवर्जितं नवं पुष्पं सुगन्धि विनिवेदयेत् ।
यत्किञ्चित् पीतवर्णं तु सितं वा शुचिनाहृतम् ॥ ९४ ॥
अवस्त्राहृतमम्लानं पुष्पं स्याद् ग्राह्यमापदि ।
सच्छिद्रं मुकुलं जीर्णं पतितं पात्रवर्जितम् ॥ ९५ ॥

१. 'लोहपा' क. पाठः. २. 'दाहतः' क. ख. ग. पाठः.

भुक्तशेषमगन्धं च केशकीटादिमिश्रितम् ।
पुष्पमापद्यपि त्याज्यमर्कपत्रगतं तथा ॥ ९६ ॥
प्रतिषिद्धानि पुष्पाणि सुस्नातोऽपि यदि स्पृशेत् ।
स्नायात् पुनरशक्तश्चेदुपस्पृश्यार्चयेत् प्रभुम् ॥ ९७ ॥
स्वयं पत्न्यथवा पुत्रः शिष्यो वा पुष्पमाहरेत् ।
शुद्धपाणिः सुपात्रस्थं पिधायानातपे न्यसेत् ॥ ९८ ॥
रात्रिपुष्पैर्यजेद् रात्रौ दिवापुष्पैर्दिवा तथा ।
आपत्काले यथायोगं प्राप्तकालं तु शस्यते ॥ ९९ ॥
निर्गन्धमपि मन्दारपीतकोरण्डकादि यत् ।
प्रशस्तं तदपि ग्राह्यं गिरिकर्ण्यादिवर्जितम् ॥ १०० ॥
दूर्वापामार्गभद्राणां तुलसीगन्धपूर्णयोः ।
तमालाश्वत्थबिल्वानां शम्याः कुशपलाशयोः ॥ १०१ ॥
पत्राणि धातकीब्राह्मीभृङ्गाणामपि पुष्पवत् ।
यवप्रियङ्गुनिष्पावमुद्गमाषचणाङ्कुरान् । १०२ ॥
सुसंभृतानलूनाग्रान् पुष्पालाभे प्रकल्पयेत् ।
पुष्पं स्वारामजं मुख्यं मध्यमं वन्यमाहृतम् ॥ १०३ ॥
अधमं क्रीतमर्चायां[2] फलं दातुः[3] प्रतिग्रहे ।
पृथग्वा सह वा पिष्टैः सितास्रेन्दुरुगायसैः[4] ॥ १०४ ॥
कृत्रिमैर्वार्चयेद् गन्धैः प्राण्यङ्गरहितैः शुभैः ।
सालसर्जपुराणां वा दारुसैंह्यैन्दवयोरुजाम् ॥ १०५ ॥
धूपमाज्यादिसंयुक्तं शुभे पात्रे निवेदयेत्[1] ।
तैलेनाज्येन वा दीपं दारुस्नेहेन वापदि ॥ १०६ ॥

१. 'निवेदयेत्' च. पाठः. २. 'र्चा', ३. 'तुं', ४. 'जा' ख. ग. पाठः.

सूत्रवर्त्तियुतं दद्यादमुखानिलदीपितम् ।
त्रिः क्षालितैरनुत्स्विन्नैरमलैः शालितण्डुलैः ॥ १०७ ॥
श्रृतं घृतोपदंशादियुतमन्नं निवेदयेत् ।
कालपक्वान्यदुष्टानि फलानि मधुराणि च ॥ १०८ ॥
अलाभे केवलैः पुष्पैर्जलैर्वा मनसार्चयेत् ॥ १०८½ ॥

इति विष्णुसंहितायां[1] पञ्चदशः पटलः ॥

---

## अथ षोडशः पटलः ।

अथ वक्ष्यामि संक्षेपाद् बिम्बशुद्धिं यथाक्रमम् ।
आचार्यं वरयेत् पूर्वं ततः कर्माणि कारयेत् ॥ १ ॥
देवस्तु द्विविधो ज्ञेयः स्थावरो जङ्गमस्तथा ।
प्रतिमा स्थावरो देव आचार्यो जङ्गमस्तथा ॥ २ ॥
भक्तानुकम्पी भगवान् विधिमन्त्रपुरस्कृताम् ।
पूजां तयोः प्रगृह्णाति याज्यो नह्यन्यथा हरिः ॥ ३ ॥
आचार्यानुमतादेव क्रिया कार्या विजानता ।
तत्पूजयैव देवे[2]श्च वरदो नान्यथा भवेत् ॥ ४ ॥
दीक्षादिसंस्कृतः शान्तो विद्वानक्रोधनो युवा ।
समयाचारकृद् वाग्ग्मी वर्णाश्रमगुणान्वितः ॥ ५ ॥
आचार्यः सर्वथा ग्राह्यः स्थापनादिषु यज्वना ।
सर्वरोगोपशान्तेन भद्राकारेण धीमता ॥ ६ ॥

---

१. 'यां प्रतिष्ठापटलः पञ्चदशः ॥' च. पाठः. २. 'वेशो व' ख. ग. पाठः.

श्रोत्रियेण गृहस्थेन स्थाप्यो देवस्तु सिद्धये ।
कुलीनाः शुचयो दक्षा दीक्षितास्तन्त्रपारगाः ॥ ७ ॥
भक्त्या दक्षा विनीताश्च विप्रा-मूर्तिधराः स्मृताः ।
देवागारे गृहे नद्यास्तीरे गोष्ठे तरुस्थले ॥ ८ ॥
अन्यत्र वा शुभे स्थाने दुर्जनालोकवर्जिते ।
गोमयेन समालिप्ते पञ्चगव्यादिशोधिते ॥ ९ ॥
आसने वस्त्रसंवीते सदर्भे प्रार्थितं गुरुम् ।
चतुर्भिर्मूर्तिपैः सार्धमष्टद्वादशभिस्तु वा ॥ १० ॥
उपवेश्य यथान्यायं पाद्यादिभिरथार्चयेत् ।
पूर्वोत्तरदिशाभागे प्रागग्रेषु कुशेषु च ॥ ११ ॥
यजमानः शुचिर्भूत्वा पूजाद्रव्याणि सादयेत् ।
प्रणवेन सकूर्चानि पात्राणि तु शुभानि च ॥ १२ ॥
वस्त्रकुण्डलयुग्मानि भूषणानि शुभानि च ।
कूर्चसंस्कृततोयेन प्रोक्ष्योत्तानानि वै क्रमात् ॥ १३ ॥
कूर्चेषु प्रणवेनैव विन्यस्यार्घ्यादि योजयेत् ।
कुशाग्रैर्यवसिद्धार्थतिलमाषफलाक्षतैः ॥ १४ ॥
सक्षीरगन्धपुष्पैश्च योजयित्वार्घ्यमर्चयेत् ।
पाद्यमाचमनीयं च पात्रयोरन्ययोस्तथा ॥ १५ ॥
मन्त्रयेत् पुनरेतानि मूलाङ्गैर्मूर्त्तिभिस्तु वा ।
दत्त्वा कूर्चान्यथैतेषामासनार्थं तु वाग्यतः ॥ १६ ॥
सपवित्रैर्जलैः पादौ क्षालयेद्धृदयेन तु ।
शिरसाचमनं दद्याच्छिखया चार्घ्यमेव च ॥ १७ ॥

१. 'ता वेदपा', २. 'क्तियुक्ता वि' च. पाठः. ३. 'क्षयेत् तानि' च. पाठः. ४. 'तिलसि', ५. 'यवमा' ख. ग. पाठः.

वस्त्रयुग्मानि भूषाश्च शेषाभ्यां तु निवेदयेत्।
पायसं भोजयेत् साज्यं प्रणम्य विधिनार्च्य च ॥ १८॥
सोष्णीषं गुरुमाचान्तमभिवाद्य प्रसाद्य च ।
यथालाभं सुवर्णादि दद्याद् देवमनुस्मरन् ॥ १९ ॥
ऋत्विग्भ्योऽपि तथा दत्त्वा वरयेत् प्रणिपत्य तान् ।
कार्यमुक्त्वा विधानेन पूजयेच्च पुनः पृथक् ॥ २० ॥
सन्तोष्य प्रियवादैश्च प्रणम्य प्रार्थयेत् ततः ।
मया सम्पूजितैरत्र दक्षिणाभिश्च तोषितैः ॥ २१ ॥
क्रियतां विष्णुयागो मे प्रार्थयामि प्रसीदतु ।
इत्युक्त्वा दक्षिणे पाणावालम्ब्य वरयेत् क्रमात् ॥ २२ ॥
तत्रों तथा करिष्यामीत्याचार्यस्तु समीरयेत् ।
एवं वै सर्वयागेषु गुरुं सम्पूज्य यत्नतः ॥ २३ ॥
प्रणिपत्यर्त्विजस्तेभ्यो दत्त्वार्घ्यं वरयेद् बुधः ।
पुनरेवं तु तन्त्रज्ञान्[1] दीक्षितान् होमिनस्तथा ॥ २४ ॥
वेदाध्ययनकर्तॄंश्च शुद्धान् वै मन्त्रपाठकान् ।
कल्पयेद् यजमानस्तानाचार्यवचने स्थितान् ॥ २५ ॥
वास्तुसङ्ग्रहमारभ्य तीर्थस्नानावसानिकम् ।
कारयेत् सर्वमेतेन भक्त्या हरिमिवार्चयेत्[2] ॥ २६ ॥
शयने सन्निवेश्यादौ बिम्बं तु सुपरीक्षितम् ।
गृहीतं धनदानेन[3] पूजयित्वात्र शिल्पिनः ॥ २७ ॥
नयनोन्मीलनं तुष्टैः कारयेच्च यथाविधि ।
प्रणवेन तु कर्तव्यः प्रतिमालोकसङ्ग्रहः ॥ २८ ॥

---

१. 'म' क. पाठः. २. 'यन्', ३. 'धान्येन' ख. ग. पाठः.

प्लुतं प्रणवमुच्चार्य पादयोस्तां तदा स्पृशेत् ।
प्रक्षाल्य वारिभिः पूर्वं दर्भैः संघृष्य सर्वतः ॥ २९ ॥
स्पृष्ट्वा गोवालकैश्चैनां घृताक्तां क्षालयेत् ततः[1] ।
शमीपल्लवसंयुक्तानक्षतान् संस्कृतेऽनले ॥ ३० ॥
भूरादिसत्यपर्यन्तैः प्रत्येकं जुहुयाच्छतम् ।
स्थूलदेहो यतो विष्णुर्वैराजश्रुतिदर्शनात् ॥ ३१ ॥
तस्मादेवं हुते विष्णोः सम्पूर्णा प्रतिमा भवेत् ।
ब्राह्मणैः स्वस्ति वाच्याथ शाकुनं सूक्तमुच्चरन् ॥ ३२ ॥
दत्त्वा दूर्वाक्षतान् मूर्ध्नि प्रणवेन समाहितः[2] ।
नीराजनं ततः कुर्यान्मङ्गलानि च दर्शयेत् ॥ ३३ ॥
अपराह्णे तु सम्प्राप्ते मूर्त्तिपैः सहितो गुरुः ।
गत्वा नद्यां तटाके वा देवखाते मनोरमे ॥ ३४ ॥
तोयपूर्णेऽथवा पात्रे सम्पूज्य वरुणं पुनः[3] ।
सपताकं तटं कृत्वा शोधितं सर्वतो वृतम् ॥ ३५ ॥
संहृत्याग्निमयं ध्यात्वा बिम्बं संहारमार्गतः ।
दर्भैर्वस्त्रैश्च संछाद्य फलकायां निवेश्य च ॥ ३६ ॥
शङ्खदुन्दुभिनिर्घोषैर्जयशब्दैश्च[4] संयुतम् ।
योगपीठं स्मरञ् ज्योतिर्बिम्बमप्सु निवेशयेत् ॥ ३७ ॥
लोकपालान् बहिर्ध्यात्वा पञ्चमन्त्रैश्च रक्षयेत् ।
प्राक्शिरः शाययित्वैवं बिम्बं तोयेऽधिवासयेत् ॥ ३८ ॥
त्रिरात्रमश्मनो[5] लोहमेकरात्रं मणिं निशाम् ।
स्नात्वाचम्य शुचिर्भूत्वा वस्त्रालङ्कारभूषितः ॥ ३९ ॥

१. 'पुंनः ।', २. 'तम्', ३. 'पुनः कु', ४. 'ब्दपुरस्सरैः ।' ख. ग. पाठः. ५. 'जं' च. पाठः.

मूर्त्तिपैः सार्धमागम्य प्रासादं सप्रदक्षिणम्।
न्यासादिकं क्रमात् कृत्वा दक्षिणे प्राङ्मुखः शुचिः ॥
प्रासादं शोधयेत् सम्यक् मुक्तमात्रं तु तक्षकैः।
सूत्रेण दर्भदाम्ना च वेष्टयित्वा समन्ततः ॥ ४१ ॥
अस्त्रदृष्ट्या समालोक्य गर्भागारं पुनस्तथा।
कुशास्त्रमार्जितं तोयैः प्रोक्ष्य गन्धैश्च लेपयेत् ॥ ४२ ॥
सर्षपाक्षतदूर्वाभिः समन्ताद् विकिरेत् पुनः।
ततश्चास्त्रेण सम्प्रोक्ष्य कुर्यात् तालत्रयं तथा[२] ॥ ४३ ॥
दूर्वाक्षतकुशाग्रैस्तु विकिरेत् पञ्चशक्तिभिः।
सर्जश्रीवेष्टलाक्षाब्जश्वेतलोध्रफलादिभिः ॥ ४४ ॥
अष्टाक्षरेण सर्वत्र धूपं दत्त्वा सदीपकम्।
पूर्णकुम्भं च धान्यं च न्यस्य पुष्पास्त्रमोचनम् ॥ ४५ ॥
कृत्वा राक्षोघ्नसूक्तेन पञ्चगव्येन सर्वतः।
चक्रमन्त्रेण च प्रोक्ष्य गोमयेनोपलेपिते ॥ ४६ ॥
आग्नेय्यां स्थण्डिले होममारभेत यथाविधि।
रक्षोहणादिमन्त्राभ्यां पक्वं[३]माज्यं च होमयेत् ॥ ४७ ॥
कृणुष्वाष्टादशैर्भूयो येदेवा इति पञ्चभिः।
जातवेदादिभिश्चैव क्रमाद् व्याहृतिभिस्तथा[४] ॥ ४८ ॥
अपामार्गसमिद्भिस्तु शतमष्टोत्तरं ततः।
चक्रमन्त्रेण वै हुत्वा हविराज्यं समापयेत् ॥ ४९ ॥

---

१. 'मव्यग्रः' क. पाठः. २ 'पुनः', ३. 'कं द्वाभ्यां च', ४. 'तः' ख. ग. च. पाठः

वस्त्रेणानीय पात्रे तु होमभस्मसमायुतम् ।
आज्यशेषमपां शेषमपामार्गरसैर्युतम् ॥ ५० ॥
मन्त्रयेच्चक्रमन्त्रेण शतमष्टोत्तरं ततः ।
पलाशाश्वत्थशाखाभिः प्रोक्ष्य सर्वत्र मन्दिरे[1] ॥ ५१ ॥
कृणुष्वेत्यादिभिः पश्चाद् विकिरेद् यवसर्षपैः ।
तालत्रयं पुनः कुर्यादग्निप्राकारमेव च ॥ ५२ ॥
पुनरष्टशतं जप्त्वा चक्रं श्वभ्रं च पूजयेत् ।
एवं कृत्वाथ राक्षोघ्नं निशि विप्रांश्च भोजयेत् ॥ ५३ ॥
तमैवैशेऽग्निमाधाय स्थण्डिले व्रीहितण्डुलैः ।
तत्पूर्वे स्थण्डिले क्लृप्ते वस्त्रास्तीर्णे घटं न्यसेत् ॥
कुशदूर्वाशमीपर्णकूर्चस्थं जलपूरितम् ।
जातिहेम न्यसेत् तस्मिन् विधिना शान्तिमर्चयेत् ॥
पाद्यादिभिः क्रमाद् द्रव्यैः शन्नोदेवीत्यृचा ततः ।
वास्तोष्पतेतिमन्त्राभ्यां पक्वं हुत्वा घृताहुतीः ॥ ५६ ॥
वास्तोष्पतेध्रुवेत्याद्यैः षड्भिर्जातादिपञ्चभिः ।
शन्नवर्गेण जुहुयात् पुनर्व्याहृतिभिस्तथा ॥ ५७ ॥
शमीसमिद्घृतान्नाज्यं तयैवर्चा तु होमयेत् ।
दूर्वाभिश्चाथ मूलेन सं[2]गव्याभिः समापयेत् ॥ ५८ ॥
हुतशेषं ततो दद्यादग्रेणाग्निं कुशेषु च ।
नमोरुद्रेति तोयाज्यैस्त्वं विप्रयजुषोक्षणम् ॥ ५९ ॥

---

१. 'रे ॥ अपामार्गसमित्सर्पिरन्नमाद्यं च होमयेत् । अस्त्रमन्त्रेण होतव्यमष्टोत्तरशतं पुनः ॥ ततः स्विष्टकृतं हुत्वा प्रोक्ष्य सर्वत्र मन्दिरे । कृणुष्वे' क. पाठः. २. 'गव्यं चाथ स' ख. ग. पाठः.

शान्तितोयसमायुक्तं कुर्याच्च स्वस्तिवाचनम् ।
पुण्याहं मूर्तिपैः सार्धं शिवं वास्त्विति वाचयेत् ॥ ६० ॥
ब्राह्मणान् भोजयेत् पश्चात् पायसं द्वादशोत्तमान् ।
मण्डपे शोधिते स्थाप्या अन्तस्तम्भेष्वृगादयः ॥ ६१ ॥
द्वारेषु च समालानि तोरणानि यथाक्रमम् ।
सुशोभनाख्यमाश्वत्थ सुभद्राख्यमुदुम्बरम् ॥ ६२ ॥
नैयग्रोधं सुकर्माख्यं सुहोत्रं प्लाक्षमेव च ।
स्योनापृथिवीमन्त्रेण प्रक्षिपेत् साक्षतांस्तिलान् ॥ ६३ ॥
उच्छ्रयस्वेति संस्थाप्य प्रादक्षिण्येन पूजयेत् ।
दिक्षु पीतो[1]ऽरुणः श्यामः कृष्णोऽच्छः कृष्णपाण्डरः ॥
पद्मवर्णश्च चित्रोऽष्टौ ध्वजाः स्थाप्या यथाक्रमम् ।
कुमुदः कुमुदाक्षश्च पुण्डरीकोऽथ वामनः ॥ ६५ ॥
शङ्कुकर्णः सर्वनेत्रः सुमुखः सुप्रतिष्ठितः ।
इत्येते पूजनीयाश्च ध्वजानामधिदेवताः ॥ ६६ ॥
अनेककोटिसंघै[2]श्च भूतैः प्रत्येकशो वृताः ।
पूर्णकुम्भान् प्रतिद्वारं द्वौ द्वौ विन्यस्य पूजयेत् ॥ ६७ ॥
पद्मरागप्रवालाप्सु प्राक् पूज्यौ पूर्णपुष्करौ ।
वैडूर्यपुष्यतोयस्थौ तथैवानन्दनन्दनौ ॥ ६८ ॥
वीरसेनसुषेणौ च नीले मरतके तथा ।
सम्भवप्रभवौ चैव मुक्तास्फटिकतोययोः ॥ ६९ ॥
वास्तुपूजां पुरा कृत्वा तोरणध्वजपूजनम् ।
भूमेः परिग्रहोऽग्नेश्च संस्कारोऽनन्तरः स्मृतः ॥ ७० ॥

---

१. 'ता' ख. ग. पाठः. २. 'ख्यै' क. पाठः.

त्रातारं यदुलूकोऽथ इमं मे सन्त इत्यृचः[1] ।
दिक्पालकलशार्चायां तन्मन्त्रा इह कीर्तिताः ॥ ७१ ॥
बह्वृचोऽध्वर्यवश्चैव छन्दोगाथर्वणा द्विजाः ।
धर्मशास्त्रार्थतत्त्वज्ञा दिक्षु पारायणे स्मृताः ॥ ७२ ॥
[2]ऐतिहासिकवाक्यार्थतत्त्वज्ञा ब्रह्मवित्तमाः ।
कोणेषु मूर्तिपा एव कल्प्या होमेष्वनुक्रमात् ॥ ७३ ॥
स्वां स्वां विद्यां पठन्तस्ते तच्चित्ता निशि जागृयुः ।
स्वस्तिके मूलविन्यस्तधान्येऽ[3]ष्टककुशान्विते ॥ ७४ ॥
द्वादशाक्षरमन्त्रेण शयनं तत्र कल्पयेत् ।
कलशान् स्थापयेदष्टौ पीठस्य परितः क्रमात् ॥ ७५ ॥
अद्भिः सम्पूरितान् सर्वान् धान्यराशिगतान् शुभान् ।
सपल्लवमुखान् सूत्रवेष्टितान् वस्त्रवेष्टितान् ॥ ७६ ॥
व्यस्तैरष्टाक्षरैरेतान् गन्धपुष्पैश्च पूजयेत् ।
योगपीठं प्रकल्प्यात्र शक्तिपर्यन्तमर्चयेत् ॥ ७७ ॥
सर्वधान्यैश्च पुष्पैश्च निर्वपेत् पीठपर्ययात् ।
विद्याधिपतयश्चात्र पूजनीयाः समन्ततः ॥ ७८ ॥
विष्णुमैन्द्रे ततस्तत्र दक्षिणे मधुसूदनम् ।
त्रिविक्रमं तु वारुण्यां वामनं तु तथोत्तरे ॥ ७९ ॥
श्रीधरं तु तथाग्नेय्यां हृषीकेशं तु नैर्ऋते ।
पद्मनाभं च वायव्यां दामोदरमथापरे ॥ ८० ॥
ऐशान्यां तस्य पीठस्य स्थापयेज्जलभाजनम् ।
सोष्णीषः सोत्तरीयश्च वाग्यतो वारि गालयेत् ॥ ८१ ॥

१. 'चा', २. 'से' क. पाठः. ३. 'न्याष्टककु' ख. ग. पाठः.

नवेनारोमवस्त्रेण प्रोक्षितेन च मन्त्रतः ।
पूरयेत् प्रणवेनैव पात्रं कुसुमवारिणा ॥ ८२ ॥
पूजयेत् पूरयित्वा तु द्वादशाक्षरविद्यया ।
रक्षितव्यं वितानाद्यैः सम्यगाच्छाद्य सर्वतः ॥ ८३ ॥
मङ्गलाङ्कुरपात्राणि मङ्गलानि च विन्यसेत् ।
शङ्खं चक्रं पताकां च श्रीवत्सं दर्पणं वृषम् ॥ ८४ ॥
मत्स्ययुग्मं च कुम्भं च मङ्गलानि प्रचक्षते ।
कुर्यान्मण्डपमैशान्यां चतुरश्रं समन्ततः ॥ ८५ ॥
चतुर्हस्तं चतुःस्तम्भं मध्ये पीठसमन्वितम् ।
स्नानद्रव्यैश्च संयुक्तं क्रमात् कुम्भेषु पूरितैः ॥ ८६ ॥
अष्टोत्तरशतं हुत्वा घृतमष्टाक्षरेण तु ।
सम्पाताज्येन संस्पृश्य कलशानभिमन्त्रयेत् ॥ ८७ ॥
हिरण्यवर्णां हरिणीमिति सर्वान् यथाक्रमम् ।
तत्रार्चां तु समानीय स्नापयेदेकबे[1]रके ॥ ८८ ॥
रत्नन्यासं पुरा कृत्वा लेप्यार्चा क्रियते यदा ।
प्रतिमान्या तु कर्तव्या लोहजा कर्मकारणात् ॥ ८९ ॥
प्रतिष्ठान्यासमुद्रादि[3] मूला[2]र्चायां प्रकल्पयेत् ।
स्नानादिशेषकर्माणि कर्मार्चायामिति स्थितिः ॥ ९० ॥
मूलार्चा वापि कर्मार्चां तथा तोयेऽधिवासिताम् ।
उद्धृत्य विधृतां यत्नाच्चतुर्भिर्मूर्त्तिधारकैः ॥ ९१ ॥
दर्भपाणिः स्थितो विद्वानुपतिष्ठेत संस्थिताम् ।
नमस्तेऽर्चे! सुरेशानि! प्रतीके विश्वकर्मणः ॥ ९२ ॥

१. 'वी' ख. ग. पाठः. २. 'लेप्यार्चा' क. पाठः. ३. 'दीन्क' ख. ग. पाठः.

प्रभाविताशेषजगद्धात्रि! तुभ्यं नमो नमः।
त्वयि सम्पूजयामीशं नारायणमनामयम् ॥ ९३ ॥
रहिता योनिदोषैस्त्वमृद्धियुक्ता सदा भव ।
विज्ञाप्यैवं दुकूलांशुसिद्धार्थकयुतं शुभम् ॥ ९४ ॥
ऊर्णासूत्रेण बध्नीयात् कौतुकं दक्षिणे करे ।
अङ्गुष्ठानामिकाभ्यां तु सारयित्वा जितादिना ॥ ९५ ॥
अष्टाक्षरेण संजप्तं सप्तधा विघ्नशान्तये ।
ततोऽर्चां तु सुवस्त्राढ्यां ब्रह्मयानेन तां नयेत् ॥ ९६ ॥
शाकुनेनैव सूक्तेन वितानाद्युपशोभिताम् ।
त्रीणीत्यास्थाप्य पीठे तां भद्रं कर्णेति कीर्तयेत् ॥ ९७ ॥
तेजोऽसीति समालिप्य गव्येनाज्येन साधकः ।
चूर्णैस्तोयैश्च संक्षाल्य स्नापयेत् तैर्यथाक्रमम् ॥ ९८ ॥
मृत्कषायौषधीतीर्थैर्गव्यैर्व्यस्तैः समस्तकैः ।
नद्यास्तटाभ्यां सङ्गृह्य मृदं वल्मीकजां तथा ॥ ९९ ॥
कुलीरवासतः क्षेत्राद् विषाणाग्राच्च वेदितः ।
शमीपलाशखदिरबिल्वाश्वत्थविकङ्कताः ॥ १०० ॥
उदुम्बराश्च न्यग्रोधकषायाङ्गानि चैव हि।
शङ्खपुष्पीं प्रियङ्गुं च विष्णुक्रान्तीं शतावरीम् ॥१०१॥
दूर्वां चैवामृतां चैव गृह्णीयाद्[1] रजनीं वचाम् ।
हिरण्यवर्णाः शुचयः समुद्रज्येष्ठेति च क्रमात् ॥ १०२ ॥
इदमाप इमं मे च तीर्थे[2] तं विनियोजयेत् ।
गायत्र्या चैव गोमूत्रं गन्धद्वारेति गोमयम् ॥ १०३ ॥

---

१. 'दञ्जलीं व' क. पाठः. २. 'र्थान्तं वि' ख. ग. पाठः.

आप्यायस्वेति च क्षीरं दधिक्राव्णेति वै दधि ।
तेजोऽसि शुक्रमित्याज्यं देवस्यत्वा कुशोदकम् ॥ १०४॥
पञ्चगव्यं पयस्वत्या यासां गन्धोदकं तथा ।
आपोहिष्ठेति वै दद्यात् स्वच्छतोयं ततः परम् ॥ १०५ ॥
परमेश्वरमन्त्रेण स्नापयेत् सकलेन च ।
मधुवातेति संयोज्य तैजसे मधुसर्पिषी ॥ १०६॥
उद्घाट्य नयने चास्य ततो हेमशलाकया ।
चित्रं देवेत्यृचा चैकमाप्यायस्वेत्यृचापरम् ॥ १०७ ॥
यजमानश्च[1] गां दद्याद् गोविन्दः प्रीयतामिति[2] ।
स्नापयेत् कलशैः पश्चात् चतुर्भिः कोणगैरपि ॥ १०८ ॥
ब्रह्मश्रीचम्पकक्षीरनीपाम्रबकुळार्जुनैः ।
साशोकैः पल्लवैर्मन्त्री हंसः शुचिषदित्यृचा ॥ १०९॥
पद्मकं रोचनां दूर्वां दर्भस्तम्बाच्छसर्षपान् ।
चन्दने जातिरावर्त्तं कुन्दं विष्णोरराटया ॥ ११०॥
यवव्रीहितिला हेम रजतं कूलमृद्द्वयम्[3] ।
गोमयं भूम्यसंस्पृष्टं सोमं राजानमित्यृचा ॥ १११ ॥
शमीवर्यमृताक्रान्तिसहाभृङ्गमहौषधीः ।
श्यामाकं विश्वतश्चक्षुरिति तैः स्नानमाचरेत् ॥ ११२ ॥
आवाहयेत्ततो देवं पीताम्बरधरं हरिम् ।
एह्येहि भगवन्! विष्णो! लोकानुग्रहकारक! ॥ ११३ ॥
यज्ञभागं गृहाणेमं वासुदेव! नमो नमः ।
पाद्यमाचमनं चार्घ्यं दद्यान्मूलेन व ततः ॥ ११४॥

---

१. 'नोऽस्य गां', २. 'प्रि', ३. 'यी' ख. ग. पाठः.

अहते वाससी दद्यात् पवित्रं चाष्टकेन तु ।
सौवर्णं दापयेत् सूत्रं विष्णुगायत्रिया पुनः ॥ ११५॥
भूषणानि ततो दद्याद् द्वादशाक्षरविद्यया ।
नीराजनं ततः कुर्याद् गन्धपुष्पाक्षतादिभिः ॥ ११६॥
स्रग्भिश्च धूपदीपैश्च फलगोरोचनाञ्जनैः ।
पादुकव्यजनच्छत्रमधुपर्कैश्च पूजयेत् ॥ ११७॥
वारिधारां च मूलेन पातयेद् देवपादयोः ।
आचामं च पुनर्धूपं मुखवासं च दर्पणम् ॥ ११८ ॥
अङ्गरागं च मालां च दद्यात् पुष्पाञ्जलिं ततः ।
सामभिश्च ततः स्तुत्वा पवित्रं स्तोत्रमीरयेत् ॥ ११९ ॥
पुण्याहं चात्र कुर्वीत वैष्णवैः सह मन्त्रवित् ।
तिलाश्च दक्षिणा देया वैष्णवेभ्यो यथाविधि ॥ १२० ॥
समाहितः स्मरेत् पश्चाद् भक्त्या तु पुरुषोत्तमम् ।
एवं कृत्वा तु तामर्चामानयेच्छयनं प्रति ॥ १२१ ॥
पौरुषेण तु सूक्तेन शङ्खभेर्यादिनिस्वनैः ।
द्वादशाक्षरमन्त्रेण शयने सन्निवेशयेत् ॥ १२२ ॥
अयं स इति चोक्त्वान्ते सर्वयोगेश्वरी[1]मिति ।
जपेदष्टाक्षरं मन्त्र मङ्गलानि च विन्यसेत् ॥ १२३ ॥
हेमपात्रे घृतं पूर्णं शिरःस्थानेऽस्य विन्यसेत् ।
राजतं मधुपूर्णं च पादस्थाने विचक्षणः ॥ १२४ ॥
सक्षीरं ताम्रपात्रं च दक्षिणेन[2] प्रकल्पयेत् ।
लोहपात्रगतं वामे शान्तितोयं च विन्यसेत् ॥ १२५ ॥

१. 'रो', २. 'सम्यगर्पये' ख. ग. पाठः.

मृत्पात्रे पञ्चगव्यं च पञ्चमं तु तदग्रतः ।
तेषामालभनं कुर्यात् परमेष्ठ्यादिभिः क्रमात् ॥ १२६ ॥
चतुरश्रं धनुर्वृत्तं त्रिकोणं च यथाक्रमम् ।
कारयेद् दिक्षु चत्वारि कुण्डानि कुशलो गुरुः ॥ १२७ ॥
अरत्निमात्रे पीठस्य समन्ताद्धस्तमानतः ।
त्रिमेखलानि सर्वाणि कार्याण्यर्धावटानि च ॥ १२८ ॥
आचार्यकुण्डादुद्धृत्य पश्चादन्येषु निक्षिपेत् ।
कुण्डेषु संस्कृतं वह्निं कृत्वोल्लेखादिकं क्रमात् ॥ १२९ ॥
जननादिविहीनं तु प्रकृतिन्यासपूर्वकम् ।
स्वशाखाग्निमुखान्तेऽन्नं गायत्र्या जुहुयुः क्रमात् ॥१३०॥
हृदयं पूर्वकुण्डे तु दक्षिणे तु शिरस्तथा ।
पश्चिमे तु शिखां कुर्यादुत्तरे कवचं तथा ॥ १३१ ॥
नेत्रास्त्रयोर्न कार्योऽत्र होमः स्यान्मूर्तिभिस्तु वा ।
समिदाज्यचरून् लाजान् सर्षपांश्च यवांस्तिलान् ॥ १३२ ॥
व्रीहीनाज्यं पुनश्चैवं सर्वकुण्डेषु होमयेत् ।
मूलेनाष्टसहस्रं तु तदाचार्यस्तु होमयेत् ॥ १३३ ॥
शतमष्टोत्तरं चात्र पूर्णां दद्यात् शतेशते ॥ १३३½ ॥

इति विष्णुसंहितायां षोडशः पटलः ॥

---

अथ सप्तदशः पटलः ।

अथ वक्ष्यामि संक्षेपादधिवासनमुत्तमम् ।
यद्योगाज्जायतेऽर्चायां सदा सन्निहितो हरिः ॥ १ ॥
अस्त्रदग्धौ करौ जातावन्यौ तत्त्वमयौ स्मरेत् ।
प्रणवाङ्गुष्ठकौ कार्यौ तौ स्वराङ्गुलिपर्वकौ ॥ २ ॥

सबिन्दुकतलौ सर्गपृष्ठगौ वामदक्षिणौ ।
व्यञ्जनानि पृथङ् न्यस्य नादमङ्गुष्ठयोर्न्यसेत् ॥ ३ ॥
रेचयित्वा ततो वायुं प्रविशेत् तत्र पूरके ।
विद्याकोशं ततः पश्चादानुपूर्व्येण मन्त्रवित् ॥ ४ ॥
महाभूतमयं देहं धर्माधर्मसमन्वितम् ।
शुष्कं दग्धं क्रमाद् ध्यात्वा प्लावितं च स्वबीजकैः ॥ ५ ॥
बिन्दुरूपयुतं ध्यायेदात्मानं व्योम्न्यवस्थितम् ।
यथा सिक्ताद् भवेद् बीजादङ्कुरस्तद्वदात्मनः ॥ ६ ॥
प्रभवं चिन्तयेद् दिव्यं प्रणवत्वमुपागतम् ।
त्रिगुणामष्टधीयुक्तां प्रकृतिं तां विदुर्बुधाः ॥ ७ ॥
आद्यावकारौ बुद्ध्याख्यौ इकारौ चाप्यहङ्कृतिः ।
मनो द्वौ तत्परौ व्योमपञ्चतत्त्वं स्वरान्तिकम् ॥ ८ ॥
आत्मजीवोदरश्रोत्रजिह्वाघ्राक्षित्वचः क्रमात् ।
ऊष्मान्तस्थाः शिरःकूटं बाहुजङ्घे च वर्गशः ॥ ९ ॥
कवर्गोऽङ्गुल्यः सर्वाः स्थूलदेहोऽयमीदृशः ।
सूर्याम्बुजस्थं वागीशं वागीश्वर्या समन्वितम् ॥ १० ॥
सर्वशक्तियुतं मन्त्रमष्टबाहुं हरिं स्मरेत् ।
दिवाकरसहस्राभं दुर्निरीक्ष्यं सुरासुरैः ॥ ११ ॥
ब्रह्मरन्ध्रेण देहान्तः प्रविशन्तं विचिन्तयेत् ।
व्यापकं विन्यसेन्मूलमङ्गानि च यथाक्रमम् ॥ १२ ॥
आत्मानं सर्वगं ध्यात्वा सर्वज्ञं विष्णुमव्ययम् ।
कुर्याद् भावान्वितो विष्णोरधिवासनमुत्तमम् ॥ १३ ॥

बिम्बाभिमानिनं जीवं तारकल्पितमाहृतम् ।
ध्यानेनात्मैकतां नीत्वा पृथिव्यादीनि संहरेत् ॥ १४ ॥

शुष्कदग्धाप्लुतोर्व्यप्सु ता वह्नौ सोऽनिले स खे ।
पञ्चतत्त्वमयं विश्वं विलीनं व्योम्नि भावयेत् ॥ १५ ॥

तन्मनोगर्वधीमायाक्रमात् तारेश्वरं नयेत् ।
तां स्वामव्याकृतिं मायामधिष्ठाय सिसृक्षया ॥ १६ ॥

नादात्मा परमेष्ठ्यादिपञ्चकं सकलं सृजेत् ।
प्रणवात्मा स्वयं विष्णुर्नकारादिषु मूर्तयः ॥ १७ ॥

वासुदेवादयः कान्ताः खादि क्ष्मान्तं च पञ्चकम् ।
स्थूलदेहोऽयमाख्यातस्तस्य विष्णोः षडात्मनः ॥ १८ ॥

सोऽनिरुद्धाब्जसम्भूतः पृथिव्यात्मा प्रजापतिः ।
सर्गभिन्नादतो विष्णोर्जात इत्यज उच्यते ॥ १९ ॥

स सृष्ट्वा पूर्वमप्तत्त्वं ससर्जाण्डं च पार्थिवम् ।
एवं सृष्टिरियं जाता चतुर्दशजगन्मयी ॥ २० ॥

तदण्डं पञ्चभूतात्मभूतं शुभ्रं हिरण्मयम् ।
बिम्बं ध्यात्वा स्वयं विष्णुर्जीवं संक्रामयेद्धृतम् ॥

स विष्णुस्तारजीवात्मा नादिभिः पञ्चशक्तिभिः ।
लिपिमूलाङ्गविन्यासैः सकलोऽष्टभुजो भवेत् ॥ २२ ॥

शयने स्थापयित्वार्चां ततो हुत्वा घृतं क्रमात् ।
कुर्यात् षोडशकं न्यासं नाहुत्वा न्यास इष्यते ॥ २३ ॥

तारव्याहृतिलिप्यृक्षकालवर्णज(ला ? लं) श्रुतिः ।
वैराजदेवतायज्ञगुणास्त्राणि यथाक्रमम् ॥ २४ ॥

तैः शक्तिमन्त्रजीवान्तैर्न्यासः षोडशधा स्मृतः ।
होमयेत् प्रणवं पूर्वं मात्रात्रयविभेदितम् ॥ २५ ॥
ब्रह्माणं केशवं रुद्रं पादहृन्मस्तके न्यसेत् ।
आहुत्यष्टशतं चात्र होतव्यं तैरनुक्रमात् ॥ २६ ॥
व्याहृतित्रितयं चैव त्रैलोक्यप्रीणनाय वै ।
अकारादिक्षकारान्तं मातृकां होमयेत् ततः ॥ २७ ॥
ताल्वास्यवीक्षणश्रोत्रदन्तोष्ठेषु कजिह्वयोः ।
असंवृता नसोर्गण्डद्वितये चैव संवृताः ॥ २८ ॥
नाभिहृच्छ्रोणिजठर[1]श्रोत्रदन्ताग्रनासिकाः ।
दृष्टिस्त्वगिति कूटाद्या दोर्जङ्घाङ्गुलयस्तथा ॥ २९ ॥
नक्षत्रग्रहताराश्च हुत्वाङ्गेषु निवेशयेत् ।
दृशोरुरोधीवाग्रेतोललाटाङ्घ्रिकचे ग्रहाः ॥ ३० ॥
रोहिण्यादिक्रमादेवं नक्षत्राणि च होमयेत् ।
हृत्ककेशललाटास्यनासिकादशनेष्वथ ॥ ३१ ॥
श्रुत्योर्बाह्वोः करद्वन्द्वे स्तनयोः कुक्षिपार्श्वयोः ।
कट्यां चक्षुषि लिङ्गेऽण्डे पायावूर्वोश्च जङ्घयोः ॥ ३२ ॥
पादयोश्च क्रमादेवं कृत्तिकान्तोडुकल्पना ।
ध्रुवो नाभ्यां स्थितस्तस्य कण्ठे सप्तर्षयस्तथा ॥ ३३ ॥
कटिदेशे स्थितं तस्य विज्ञेयं मातृमण्डलम् ।
पदानि त्रीणि पादेऽस्य वनमाला तु वीथिका ॥ ३४ ॥
रोमाणि तारकासंघा अगस्त्यः कौस्तुभो मणिः ।
कालरूपं यजेत् पूर्वं संवत्सरतनुं हरिम् ॥ ३५ ॥

---

१. 'रे' ख. ग. पाठः,

कास्यहृ*द्विस्तनक्रोडकटिद्व्यूरुनलाङ्घ्रिषु ।
चैत्रादयः स्थिता मासा द्वादशैवं सफाल्गुनाः ॥ ३६ ॥
उत्पूर्वश्चानुपूर्वश्च परिपूर्वश्च वत्सरा[1]ः ।
सम्पूर्वश्चेति विज्ञेयाः चत्वारस्तस्य बाहवः ॥ ३७ ॥
पर्वाण्यस्याङ्गपर्वाणि ऋतवश्चाङ्गसंज्ञकाः ।
अहोरात्राणि चास्थीनि रोमाण्यल्पाः क्षणादयः ॥ ३८ ॥
कृतादि मुखहृच्छ्रोणिपादे युगचतुष्टयम् ।
मन्वन्तराणि बाह्वोश्च विभागेन प्रकल्पयेत् ॥ ३९ ॥
परार्धद्वितयं जङ्घे महाकल्पं शिरो विदुः ।
अयने द्वे पदे चैवमुक्तः संवत्सराकृतिः ॥ ४० ॥
मुखबाहूरुपादस्था वर्णाश्च ब्राह्मणादयः ।
पादाङ्गुलीषु विज्ञेया व[2]र्णाः सङ्करजातयः ॥ ४१ ॥
सर्वाङ्गसन्धिषु तथा उत्कृष्टाः सङ्करास्तु य ।
गावो मुखेऽस्य विज्ञेयाः स्तनयोश्चाप्यजाविकाः ॥ ४२ ॥
पदोरेकशफा ऊर्वोर्ग्राम्यारण्या व्यवस्थिताः ।
केशेषु मेघा विज्ञेया रोमाण्यभ्राणि तस्य वै ॥ ४३ ॥
सर्वाङ्गावयवा नद्यः समुद्राः कुक्षिसंस्थिताः ।
यज्ञास्तस्य शिरो ज्ञेयमृग्वेदो दक्षिणो भुजः ॥ ४४ ॥
सामवेदः स्मृतो वामः सर्वोपनिषदो हृदि ।
इतिहासपुराणानि जङ्घे यजुरुरः स्मृतम् ॥ ४५ ॥
अथर्वाङ्गिरसो नाभिः कल्पसूत्राणि पादयोः ।
शीक्षा व्याकरणं वक्त्रं तर्कः कण्ठं समाश्रितः ॥ ४६ ॥

१. 'रः' क. पाठः. २. 'र्णस' ख. ग. पाठः.

* व्यख्यानाद् द्विस्तनामित्येकम् ।

मीमांसा हृन्निरुक्तं च छन्दो ज्योतिश्च चक्षुषी ।
गारुडं भूततन्त्रं च श्रोत्रयुग्मे व्यवस्थितम् ॥ ४७ ॥
हस्तयोश्च धनुर्वेद आयुर्वेदश्च कीर्त्तितः ।
योगशास्त्राणि हृद्येव नीतिशास्त्राणि पादयोः ॥ ४८ ॥
वाग्गीतं करयोर्नृत्तं कला विद्याश्च रोमसु ।
द्यौर्मूर्धेन्द्वर्कनेत्रस्य घ्राणे प्राणात्मकोऽनिलः ॥ ४९ ॥
नाभ्यां व्योमाब्धयो बस्तौ पादे भूः सचलाचला ।
हिरण्यगर्भं मूर्ध्न्यस्य सर्पान् केशेषु विन्यसेत ॥ ५० ॥
रुद्रं ललाटे भ्रुकुटावन्तकं श्रवणेऽश्विनौ ।
मुखे वैश्वानरं न्यस्य जिह्वायां च सरस्वतीम् ॥ ५१ ॥
रुद्रान् दत्सु वसून् कण्ठे ह्यश्यादित्यान् निवेशयेत् ।
बाह्वोरिन्द्रं बलिं चैवं प्रह्लादं वामके स्तने ॥ ५२ ॥
दक्षिणे विश्वकर्माणं नारदं कुक्षिसंस्थितम् ।
अनन्तं वामकुक्षिस्थं वरुणं बस्तिसंस्थितम् ॥ ५३ ॥
मित्रं पायौ कटौ तार्क्ष्यं विश्वान् देवान् तथोरगान् ।
पितॄन् जानुद्वये यक्षान् नले गुल्फे तु राक्षसान् ॥ ५४ ॥
पिशाचान् प्रपदे पार्ष्ण्योर्न्यसेद् विद्याधरांस्तथा ।
ग्रहांस्तले नखेष्वेव जम्भकादीन् सपूतनान् ॥ ५५ ॥
अङ्गुल्योऽप्सरसः कट्यां कार्त्तिकेयगणेश्वरौ ।
गन्धर्वानोष्ठयोर्न्यस्य सर्वभूतानि पृष्ठतः ॥ ५६ ॥
मत्स्यं के पादयोः कूर्मं वराहं जङ्घयोर्न्यसेत् ।
नरसिंहं ललाटे तु वामनं मुखमध्यतः ॥ ५७ ॥

नाभिहृत्कटिगुह्येषु रामान् कृष्णं च विन्यसेत् ।
कल्किनं जानुदेशे तु नरनारायणौ पदे ॥ ५८ ॥
न्यसेद्[1] बाहुषु चैवास्य तथा बाहुसहस्रिणम् ।
अश्वमेधः शिरस्तस्य नरमेधो ललाटकम्[2] ॥ ५९ ॥
राजसूयो मुखं चैव गोसवः कण्ठसंस्थितः ।
द्वादशाहश्च हृदयमहीनो नाभिसंस्थितः ॥ ६० ॥
विश्वजिद् विश्वमेधं च कटिदेशे व्यवस्थितौ ।
अग्निष्टोमोऽस्य लिङ्गस्थो वृषणे चातिरात्रकः ॥ ६१ ॥
अप्तोर्यामस्तथोरुस्थः षोडशी जानुगोचरे ।
उक्थ्यश्च वाजपेयश्च नले त्वग्निस्तु पादयोः ॥ ६२ ॥
चातुर्मास्यानि चैवास्य बाहुष्वेव नियोजयेत ।
सौत्रामणिं तले न्यस्य पश्चिष्टिं चाङ्गुलीगताम् ॥ ६३ ॥
दर्शश्च पौर्णमासश्च दृशो रोमाणि चेष्टयः ।
स्वाहाकारवषट्कारौ स्तनयोः संव्यवस्थितौ ॥ ६४ ॥
बाह्वोरङ्गुलयः पञ्चमहायज्ञाः प्रकीर्तिताः ।
हृदयं दक्षिणा तस्य दर्भाः केशास्त्वगम्बरम् ॥ ६५ ॥
मुखमाहवनीयाग्निर्हन्नाभी दक्षिणापरौ ।
प्रवर्ग्यो भूषणं तस्य सवनानि गतित्रयम् ॥ ६६ ॥
पाकयज्ञा हविर्यज्ञाश्चरणाङ्गुलयः स्मृताः ।
आज्यभागौ दृशौ ज्ञेयौ वेदी श्रोणी मुखं हविः ॥ ६७
होमेन[3] प्रीणयेत् पूर्वं तनुं तस्य गुणात्मिकाम् ।
धर्मं तु विन्यसेन्मूर्ध्नि दशधा संव्यवस्थितम् ॥ ६८ ॥

---

१. 'स्ये', २. 'के', ३. 'सो' क. पाठः.

ज्ञानं हृद्यष्टधा गुह्ये वैराग्यं नवधा न्यसेत् ।
ऐश्वर्यं चाष्टधा पादे सेयं गुणमयी तनुः ॥ ६९ ॥
शङ्खचक्रगदापद्मन्यासः साधारणः स्मृतः ।
विशेषा ये च तन्त्रोक्ता मूर्त्तिभेदेन तान्यपि ॥ ७० ॥
हृदि शान्तिर्ललाटे श्रीर्मुखे चास्य सरस्वती ।
रतिर्गुह्ये नले प्रीतिः कीर्त्तिस्तु परितो भवेत् ॥ ७१ ॥
कुक्षौ तुष्टिस्तनौ पुष्टिः शक्तिन्यासोऽयमीरितः ।
मन्त्रन्यासोऽक्षराङ्गात्मा पूर्वमेव समीरितः ॥ ७२ ॥
श्रीवत्समुरसि न्यस्य कौस्तुभं नाभिमण्डले ।
वनमालां गले न्यस्य मुद्रान्यासोऽयमीरितः ॥ ७३ ॥
नाभेरधस्तादुत्थाप्य करणैश्च समन्वितम् ।
तन्मात्रदेहप्राणैश्च पञ्चभिर्व्याप्य विग्रहम् ॥ ७४ ॥
ऐश्वर्यधर्मज्ञानैश्च वैराग्येण च संयुतम् ।
स्फुरद्रश्मिप्रताने[1]न व्याप्ताशेषदिगन्तरम् ॥ ७५ ॥
दिवाकरसहस्राभामिडया ब्रह्मरन्ध्रगम् ।
स्थित्वा किञ्चित् ललाटेऽन्तः प्रविशन्तं विचिन्तयेत् ॥
शीर्षण्यांस्तु दश प्राणान् तत्रस्थोऽपि नियोजयेत् ।
कर्णिकाद्वारमार्गेण प्रविश्य हृदयाम्बुजम् ॥ ७७ ॥
वृत्तिपञ्चकभेदेन प्राणादींस्तत्र योजयेत् ।
पादनासान्तरे प्राणमपानं पृष्ठतो न्यसेत् ॥ ७८ ॥
व्यानं सर्वगतं चैव उदानमुदरोर्ध्वगम् ।
समानं नाभिहृदये नागादीन्यथ पञ्च वै ॥ ७९ ॥

---

१. 'पे' ख. ग. पाठः.

पुर्यष्टकं हृदि न्यस्य तन्मध्ये पुरुषोत्तमम् ।
अनुग्रहकरं सौम्यं सर्वज्ञं विश्वतोमुखम् ॥ ८० ॥
ध्यायेदेवं कृते सार्चा सजीवा जायते क्षणात् ।
अधिवासे न सा कार्या न्यासाः पञ्चदशैव तु ॥ ८१ ॥
सजीवकरणं कुर्यात् स्थापिते मधुसूदने ।
जीवन्यासक्रमं यस्तु न जानात्युपदेशतः ॥ ८२ ॥
आचार्यो न स मन्तव्यो निग्राह्यस्तस्करो यथा ।
एतस्मिन्नेव काले तु पिण्डिकां चाधिवासयेत् ॥ ८३ ॥
न्यासक्रमस्तु तत्रापि कथ्यमानोऽवधार्यताम् ।
शोधयित्वा पुरा दर्भं मृत्स्वग्गव्याम्बुभिः क्रमात् ॥ ८४ ॥
तत्राधिवासयेद् विद्वान् प्रकृतिं पिण्डिकात्मिकाम् ।
मातृका विन्यसेत् तत्र शक्तिरूपां प्रकल्पयेत् ॥ ८५ ॥
प्रणवं विन्यसेन्मध्ये तद्बाह्ये षोडश स्वरान् ।
व्यञ्जनानि च तद्बाह्ये पर्जन्यादि प्रदक्षिणम् ॥ ८६ ॥
तत्रैव विन्यसेत् पद्मं पद्मे स्थाप्याश्च शक्तयः ।
अनुग्रहं यया युक्तो नित्यं स कुरुते प्रभुः ॥ ८७ ॥
स्थितस्तस्यां सदा पूज्यः परात्मा हरिरव्ययः ।
पाद्यगन्धादिभिर्देवीं बलिभिश्च प्रपूजयेत् ॥ ८८ ॥
अहतैश्चैव वासोभिर्लक्ष्मीरूपां च कल्पयेत् ।
होमं शक्त्यष्टकान्तानां कुर्यादाचार्य एव तु ॥ ८९ ॥
अयनस्य च शक्तेश्च प्रासादस्य ततः क्रमात् ।
तत्रोक्तस्तत्त्वविन्यासः पूर्वमेवाधुना स्मृतः ॥ ९० ॥
तथा पुरुषरूपं तं कल्पयित्वा यथाक्रमम् ।
प्रासादं पूजयेत् पश्चाद् गन्धपुष्पादिभिः शुभैः ॥ ९१ ॥

ततो ब्रह्मशिलां चात्र शोधितामधिवासयेत् ।
अनन्तासनविन्यासो नपुंसकशिलोपरि ॥ ९२ ॥
नपुंसकं परं ब्रह्म सर्वाधारं तदुच्यते ।
आलिखेन्मण्डलं चात्र तण्डुलैः पञ्चराङ्गिकैः ॥ ९३ ॥
चतुरश्रं चतुर्द्वारं मध्ये पद्मसमान्वितम् ।
पूर्वं तु सकलीकृत्य प्रतिमां देशिकोत्तमः ॥ ९४ ॥
अङ्गप्रत्यङ्गभेदेन स्वकल्पोदितवर्त्मना ।
साङ्गं प्रपूजयेद्देवं गन्धपुष्पादिभिः क्रमात् ॥ ९५ ॥
अलङ्कारैर्निवेद्यैश्च यथाविभवविस्तरम् ।
मण्डलेऽभ्यर्चयेद्विद्वान् साङ्गं देवमधोक्षजम् ॥ ९६ ॥
अर्चायां या तु विन्यस्ता मूर्तिस्तां तत्र कल्पयेत् ।
साङ्गं सपरिवारं च तत्रेष्ट्वा विधिनाच्युतम् ॥ ९७ ॥
हुत्वाग्निं च यथान्यायं पार्षदेभ्यो बलिं हरेत् ।
आद्याश्च कर्मजाश्चैव ये भूताः प्राग्दिशि स्थिताः ॥९८॥
प्रसन्नाः परितुष्टास्ते प्रतिगृह्णन्त्विमं बलिम् ।
दक्षिणे पाश्चिमे चैव उत्तरे च नियोजयेत् ॥ ९९ ॥
गन्धपुष्पाणि धूपं च दीपमन्नं जलं क्रमात् ।
विदिक्षु च यथान्यायं दद्याच्चैव ततो बलिम् ॥ १०० ॥
वृक्षेषु पर्वताग्रेषु ये विदिक्षु च संस्थिताः ।
भूमौ व्योम्नि स्थिता ये च तेऽपि गृह्णन्त्विमं बलिम् ॥१०१॥
विनायकाः क्षेत्रपाला ये चान्ये बलिकाङ्क्षिणः ।
पूर्वाद्याः पार्षदाश्चैव प्रतिगृह्णन्त्विमं बलिम् ॥ १०२ ॥

---

१. 'घयित्वाधि' ख. ग. पाठः.

परितोऽनेन वै दद्यात् परिभ्रम्य प्रदक्षिणम् ।
आचम्यान्तः प्रविश्याथ कृतन्यासः समाहितः ॥ १०३ ॥
शान्तिं व्याहृतिभिर्हुत्वा ततो देवं क्रमात् स्पृशेत् ।
घृतं भूरिति हुत्वा द्वौ[1] पादौ देवस्य संस्पृशेत् ॥ १०४ ॥
दध्ना च भुव इत्येवं ततो नाभ्यन्तरं स्पृशेत् ।
क्षीरं स्वरिति हुत्वाथ ततोऽस्य हृदयं स्पृशेत् ॥ १०५ ॥
भूर्भुवः स्वश्च हुत्वैवं मधुना मूर्ध्नि संस्पृशेत् ।
सर्वं मूलेन हुत्वान्ते सर्वगात्रं तु संस्पृशेत् ॥ १०६ ॥
अष्टाष्टाहुतयश्चात्र निर्दिष्टाः शान्तिकर्मणि ।
स्रुवेण द्रव्ययुक्तेन स्पर्शनं चात्र कीर्तितम् ॥ १०७ ॥
द्रव्ये द्रव्ये तथा स्पृष्टे गन्धपुष्पैः समर्चयेत् ।
क्षालयित्वा स्रुवं पश्चात्[2] कार्या द्रव्यान्तराहुतिः ॥ १०८ ॥
चतस्रो धेनवः स्थाप्या दक्षिणद्वारसन्निधौ ।
उत्तराभिमुखाः शान्ता रज्जुबद्धाः सवत्सकाः ॥ १०९ ॥
गङ्गा च यमुना चैव तथा गोदा सरस्वती ।
नामभिः पूजयित्वा[3] ता गन्धपुष्पैर्यथाक्रमम् ॥ ११० ॥
दुहेत्ता विष्णुगायत्र्या तयैव श्रपयेच्चरुम् ।
निवेदयेत् तया चैव तयैवान्ते बलिं हरेत् ॥ १११ ॥
भोजयेद् ब्राह्मणांस्तत्र[4] भक्तान् द्वादश पायसम् ।
मण्डपस्योत्तरे पार्श्वे हिरण्यं दक्षिणा भवेत् ॥ ११२ ॥

---

१. 'दौ' ख. ग. पाठः. २. 'कुयात् पश्चात् द्र' क. पाठः. ३. 'नीयास्ता' क. घ. पाठः. ४. 'श्चैव भ' क., 'श्चात्र भ' घ. ङ. पाठः.

सुरभीश्च गुरोर्दद्याद् विष्णुर्मे प्रीयतामिति ।
एवं कृत्वा ततः पश्चाद् रात्रौ जागरणं भवेत् ॥ ११३ ॥
शङ्खतूर्यादिसंयुक्तं नृत्तगीतादिसंयुतम् ।
सेतिहासपुराणाभिः कथाभिश्च नयेन्निशाम् ॥ ११४ ॥
प्रभाते सुदिने वारे पुण्यराश्युदये तथा ।
मौहूर्त्तिकोपदिष्टेन लग्नेन स्थापयेत् सुधीः ॥ ११५ ॥

इति विष्णुसंहितायामधिवासपटलः सप्तदशः ॥

---

## अथाष्टादशः पटलः ।

अथ वक्ष्यामि संक्षेपात् प्रतिष्ठाविधिमुत्तमम् ।
वास्तुयागं पुरा कृत्वा मुहूर्त्ते स्थापनं भवेत् ॥ १ ॥
कृत्वा नान्दीमुखं शक्त्या षडष्टौ द्वादशाथवा ।
भोजयेद् ब्राह्मणान् शान्तान्[1] वैष्णवांस्तु विशेषतः ॥
दद्याद्वस्त्राङ्गुलीयादि हिरण्यं च स्वशक्तितः ।
प्रासादस्य तु सर्वस्य मार्जनं कारयेत्ततः ॥ ३ ॥
तथाचाभ्यन्तरं दर्भैः सशलाकैः प्रयत्नतः ।
पञ्चगव्येन गन्धैश्च प्रोक्ष्य मूलाभिमन्त्रितैः ॥ ४ ॥
होमार्थं वालुकाभिस्तु प्रासादस्य समन्ततः ।
कारयेच्चतुरश्राणि स्थण्डिलानि यथाक्रमम् ॥ ५ ॥
दिक्षु चाष्टासु कृत्वैवमष्टौ च कलशान् न्यसेत् ।
कुसुमोदकसम्पूर्णान् सपिधानान् सपल्लवान् ॥ ६ ॥
सप्तसप्तविभागेन गर्भागारे विभाजिते ।
ब्रह्मदेवमनुष्याणां पिशाचानां पदानि तु ॥ ७ ॥

---

१. 'शस्तान्' ख. ग. पाठः.

मध्यादारभ्य यत्नेन क्रमाद् ज्ञेयानि सर्वतः ।
ब्राह्मः पञ्चदशांशः स्याद् देवभागास्त्रयोदश ॥ ८ ॥

एकादश नवांशाश्च शिष्टयोः पृष्ठभागतः ।
गमनं त्रिविधं प्रोक्तं पृष्ठसौम्येशभेदतः ॥ ९ ॥

कल्पनीयं यथान्यायं द्रव्यसंस्थानयोगतः ।
स्थितासीनशयानानां स्थानानि परिकल्पयेत् ॥ १० ॥

ब्रह्मांशे मध्यमं त्यक्त्वा द्वितीयं चापि पृष्ठतः ।
स्थितैकबेरबिम्बस्य तृतीये स्थानमिष्यते ॥ ११ ॥

त्रिभक्ते द्वारविस्तारे[1]त्रिसप्तांशेषु[2] मध्यमे ।
मध्यार्धेनोत्तरे सूत्रं गमनार्थं प्रकल्पयेत् ॥ १२ ॥

पश्चिमोत्तरसंयोगे कर्णसूत्रं प्रकल्प्य तु ।
बिम्बाङ्गुलियवेनैशे गमयेद् द्वियवेन वा ॥ १३ ॥

ब्रह्मभागं परित्यज्य स्थानार्चा स्थाप्यते यदि ।
तन्मण्डलाधिपो राजा स्थापकश्च विनश्यति ॥ १४ ॥

क्रिया च निष्फलैव स्यात् तस्माद्यत्नेन मापयेत् ।
किञ्चिन्मानुषमाश्रित्य कुर्यादासनकर्म च ॥ १५ ॥

देवमानुषभागाभ्यां कुर्याच्च शयनं बुधः ।
अर्चनापीठिका ब्राह्मे स्थापना दैविके यदा ॥ १६ ॥

मानुषेऽस्य परीवाराः पैशाचे त्वायुधानि च ।
कृत्वा पादशिलास्थानं वृत्तं वा चतुरश्रकम् ॥ १७ ॥

पादपीठस्य चाधस्तात् ततो ब्रह्मशिलां न्यसेत् ।
त्वमेव परमा शक्तिस्त्वमेवासनधारिका ॥ १८ ॥

---

१. 'रे', २. 'शं तु म ।' ख. ग. पाठः.

देवाज्ञया त्वया देवि! स्थातव्यमिह सर्वदा ।
इति विज्ञाप्य तां पूर्वं गन्धपुष्पैः प्रपूजिताम् ॥ १९ ॥
ध्यात्वोर्वीं स्थापयेद्गर्त्ते मन्त्रेणानेन देशिकः ।
स्थितं चराचरं यस्यां रत्नानां निधिरव्ययः ॥ २० ॥
सा त्वं ब्रह्मशिलारूपा तिष्ठात्र धरणि! स्थिरा ।
एवं संस्थाप्य तां भूयो गन्धपुष्पैः प्रपूज्य च ॥ २१ ॥
रत्नन्यासं ततः कुर्याद् विधिदृष्टेन वर्त्मना ।
गर्त्ताश्च निम्नावरणाश्चत्वारो विहिताः क्रमात् ॥ २२ ॥
मध्यान्तमष्टदिक्ष्वष्टौ न्यस्तव्यानि यथाक्रमम् ।
तेषु बीजानि रत्नानि धातुलोहायुधानि च ॥ २३ ॥
सर्वद्रव्याणि संयोज्य ब्रह्मस्थाने तु विन्यसेत् ।
ये गुणाः प्रथिता विष्णोरैश्वर्याष्टकसंज्ञया ॥ २४ ॥
तानि रत्नानि दिक्स्थाने न्यासकाले विचिन्तयेत् ।
वायुव्योमान्तरस्थानि येषां बीजानि ते गुणाः ॥ २५ ॥
ईशित्वादिक्रमात् सम्यक् पूर्वाद्याशास्विह स्मृताः ।
मध्ये तु प्रणवो ज्ञेयो गुणाष्टकयुतः पुमान् ॥ २६ ॥
शोधयेत् पञ्चगव्येन गर्त्तमष्टाक्षरेण तु ।
प्रोक्षयेद् गन्धतोयैश्च द्वादशाक्षरविद्यया ॥ २७ ॥
होमकर्म ततः कुर्यात् प्रासादोत्तरपार्श्वतः ।
लौकिकं चाग्निमानीय शरावेऽभिनवे ततः ॥ २८ ॥
वैष्णवीकरणं कुर्यात् संस्कृतं वह्निमानयेत् ।
अष्टाक्षरेण जुहुयादाज्याहुतिसहस्रकम् ॥ २९ ॥

१. 'जयेत् ॥ ध्या' ख. ग. पाठः.

ततः समित्सहस्रं च द्वादशाक्षरविद्यया ।
हुत्वाज्यं चाथ गायत्र्या रत्नानि समुपस्पृशेत् ॥ ३० ॥
आज्याहुतिसहस्रं वा गायत्र्यैवात्र होमयेत् ।
अथवाष्टशतं मुख्यं मध्यमं चाधमं भवेत् ॥ ३१ ॥
तया संस्पृश्य रत्नानि गर्त्तेषु विनिवेशयेत् ।
न गर्त्तादधिकं द्रव्यं न हीनं च प्रकल्पयेत् ॥ ३२ ॥
क्वचिद्द्रव्यसमं गर्तं कारयेत् कुशलो गुरुः ।
अष्टाक्षरस्य वर्णैस्तु व्यस्तैरेव यथाक्रमम् ॥ ३३ ॥
यवादीन् दिक्षु विन्यस्य मध्ये सिद्धार्थकं न्यसेत् ।
ततो वज्रादिरत्नानि पद्मरागं च मध्यतः ॥ ३४ ॥
मनःशिलादिधातूंश्च[1] पारतं तं तथा न्यसेत् ।
सुवर्णादीनि दिक्ष्वष्टौ मध्ये पद्मं हिरण्मयम् ॥ ३५ ॥
संस्पृशेद् विष्णुगायत्र्या ततो गर्त्तं सदक्षिणम् ।
बीजादीनामलाभेऽपि तत्स्थानेषु यथाक्रमम् ॥ ३६ ॥
शालिमुक्ताहरीतालसुवर्णानि न्यसेद् बुधः ।
पुण्याहं वाचयेत् पूर्वं वैष्णवैः सह मन्त्रवित् ॥ ३७ ॥
रत्नन्यासं ततः कृत्वा पिण्डिकां तत्र विन्यसेत् ।
प्रणीय वैष्णवं वह्निमैशान्यां मूलविद्यया ॥ ३८ ॥
जुहुयात् समिधो ब्राह्मीः सहस्रं शतमेव वा ।
अष्टोत्तरमथाज्येन गायत्र्या विष्णुसंज्ञया ॥ ३९ ॥
मूर्तिशक्तिभिरङ्गैश्च घृतमेव यथाक्रमम् ।
हुत्वा च शक्तितो विद्वान् शान्तितोयं समाहरेत् ॥ ४० ॥

---

१. 'तुं च पा' ख. ग., 'तूनि पा' ङ. पाठः.

ततश्चाग्निं समानीय वैष्णवैर्मन्त्रवित्तमैः।
होतव्यमष्टदिक्ष्वेवं समिद्भिर्मूलविद्यया ॥ ४१ ॥
पलाशखदिराश्वत्थप्लक्षन्यग्रोधजास्तथा ।
काश्मर्यो रोहिताश्चैवं बिल्वोदुम्बरजाः क्रमात् ॥ ४२ ॥
द्वादशाङ्गुलमानास्ताः समिधस्तु प्रकीर्तिताः ।
कनिष्ठिकाप्रमाणाश्च पृथगष्टसहस्रिका[2]ः ॥ ४३ ॥
एवं कृत्वा दिशाहोमं शान्तिवारि समाहरेत् ।
वैष्णवे ताम्रपात्रे तु सर्वकुम्भोपसंभृ[3]तम् ॥ ४४ ॥
शतवारं तु मूलेन मन्त्रयित्वाथ देशिकः ।
अष्टाक्षरस्य वर्णैस्तु पूरयित्वा प्रदक्षिणम् ॥ ४५ ॥
प्रणवेन तु सम्पूज्य[4] गन्धपुष्पैर्यथाक्रमम् ।
करगुप्तं तदादाय सपिधानं सवस्त्रकम् ॥ ४६ ॥
ध्यात्वात्र परमं विष्णुं तेजोरूपमनामयम ।
कर्मार्चायास्ततो मूर्ध्नि सिञ्चेदोमित्युदाहरन् ॥ ४७ ॥
सिक्त्वा तु प्रतिमामूर्ध्नि सर्वतीर्थमयं जलम् ।
विसृज्य वाससी पूर्वे वस्त्राभ्यां छादयेत् पुनः ॥ ४८ ॥
गन्धपुष्पादिभिः सम्यग् यथाविभवमर्चयेत् ।
उत्तिष्ठेति समुत्थाप्य शङ्खदुन्दुभिनिःस्वनैः ॥ ४९ ॥
प्रतिमामानयेद् विद्वान् प्रासादस्य प्रदक्षिणम् ।
अतो देवेति सूक्तेन मूर्तिपैः सहितो गुरुः ॥ ५० ॥

---

१. 'वं', २. 'स्र' ख. ग. पाठः. ३. 'हृ' क. घ. ङ. पाठः. ४. 'स्पृश्य ग' ख. ग. पाठः. ५. 'त्रविस्तरम्' क. ग. पाठः.

द्वारदेशे च दत्त्वार्घ्यं मुहूर्ते शोभने ततः ।
प्रवेशयेत् प्रयत्नेन प्रासादं देशिकोत्तमः ॥ ५१ ॥
प्रवेश्यान्तर्यथा किञ्चिदधश्चोर्ध्वं न संस्पृशेत् ।
पीठं प्रदक्षिणीकृत्य ततः सर्वेण विन्यसेत् ॥ ५२ ॥
ध्यायेच्च परमं विष्णुं निष्कलं मन्त्रवित्तमः ।
सुलग्ने स्थापयेद् ध्यात्वा सर्वतत्त्वमयं सुधीः ॥ ५३ ॥
लोकानुग्रहहेत्वर्थं स्थिरीभव सुखाय नः ।
सान्निध्यं हि सदा देव! प्रत्यहं परिवर्तय ॥ ५४ ॥
मा भूत् प्रजाविरोधोऽस्मिन् यजमानः समृद्ध्यताम् ।
सभूपालं तथा राष्ट्रं सर्वोपद्रववर्जितम् ॥ ५५ ॥
क्षेमेण वृद्धिमतुलां सुखमक्षयमश्नुताम् ।
इत्युक्त्वाग्रे पठेच्चास्य विश्वतश्चक्षुरित्यृचम् ॥ ५६ ॥
सजीवकरणं कृत्वा पञ्चोपनिषदा क्रमात् ।
शान्तिं हुत्वा यथान्यायं देवं तमभिषेचयेत् ॥ ५७ ॥
ध्यात्वा तु निष्कलं विष्णुं सकलं भावयेत्ततः ।
आकाशं तस्य मूर्तिः स्यात् पृथिवी तस्य पीठिका ॥५८॥
विग्रहं कल्पयेत् तस्य तेजसः परमाणुभिः ।
तेजोमयं ततो ध्यात्वा शङ्खचक्रगदाधरम् ॥ ५९ ॥
मन्त्रन्यासं ततः कुर्यात् सर्गस्थित्यन्तभेदतः ।
तेजोमयं ततो ध्यात्वा सकलं सकलेश्वरम् ॥ ६० ॥
निरुध्य प्रणवेनाथ विभक्तेन्द्रियविग्रहम् ।
सर्वशक्तिसमायुक्तं सर्वावयवसुन्दरम् ॥ ६१ ॥

---

१. 'तस्य' ख. ग. पाठः.

पीताम्बरकिरीटादिप्रोज्ज्वलं प्रोज्ज्वलायुधम् ।
अर्चयेत् सकलीकृत्य साङ्गं सावरणं ततः ॥ ६२ ॥
दर्शयित्वाथ मुद्रां च प्रणमेद् दण्डवत् क्षितौ ।
ब्रह्मादिपरिवारांस्तु स्वनाम्नास्त्राणि विन्यसेत् ॥ ६३ ॥
अर्चयित्वा स्वमुद्राश्च दर्शयेत् पार्षदान् पृथक् ।
पूजयित्वा ततो देवं प्रणम्याञ्जलिमुद्रया ॥ ६४ ॥
जपेदष्टशतं मूलमनुज्ञाप्य तमीश्वरम् ।
निर्गम्याभिमुखो भूत्वा पुष्पतोयादिसंयुतम् ॥ ६५ ॥
द्वारि चण्डं प्रचण्डं च देवदौवारिकावुभौ ।
नमोन्तेन स्वनाम्ना तु स्थापयित्वा बलिं हरेत् ॥ ६६ ॥
वैनतेयमनन्तं च गणेशं दक्षिणेश्वरम् ।
लोकपालांश्च संस्थाप्य विष्वक्सेनं च पूजयेत् ॥ ६७ ॥
लेप्येऽधिवास्य कर्मार्चां प्रवेश्य सुरमन्दिरम् ।
इयं सा देव ते मूर्तिरोमित्युक्त्वात्र विन्यसेत् ॥ ६८ ॥
जीवन्यासादि सर्वं तु कर्तव्यमिह पूर्ववत् ।
स्नानादीनि तु कर्माणि कर्मार्चायां प्रयोजयेत् ॥ ६९ ॥
तत्त्वन्यासादि सर्वं तु मूलार्चायामिति स्थितिः ।
विष्णुपारिषदान् सर्वान् बलिपीठे प्रकल्प्य तु ॥ ७० ॥
उपस्पृश्य कृतन्यासः प्रविश्यान्तर्गृहं सुधीः ।
मूलमष्टशतं जप्त्वा देवं तमभिवादयेत् ॥ ७१ ॥
स्तोत्रैर्नानाविधैः स्तुत्वा महापुरुषपूर्वकैः ।
प्रणाममुद्रया पश्चादष्टाङ्गं प्रणिपत्य च ॥ ७२ ॥

१. 'च' ख. ग. पाठः.

नृत्तं गीतं च वाद्यं च विविधं कारयेत् ततः।
तत्रानिवारितं यत्नादन्नाद्यं चापि कारयेत् ॥ ७३ ॥
आचार्यं पूजयेत् पश्चाद् दक्षिणाभिः समूर्तिपम् ।
यागोपयोगि यद् द्रव्यं सर्वं चास्मै निवेदयेत् ॥ ७४ ॥
वैष्णवान् पूजयेत् पश्चाद् यथाविभवविस्तरम् ।
लाक्षा सर्जरसः शङ्खः सिकता कुरुविन्दकः ॥ ७५ ॥
पुरं हिङ्गुलकं बोळा फलक्वाथेन बन्धनम् ।
विमलाद्यष्टकं पेष्यं द्रवद्रव्यमनुग्रहाः ॥ ७६ ॥
नवशक्तिमयो बन्धो लक्ष्मीमाधवयोर्भवेत् ।
एवं कृत्वाष्टबन्धं तु घृताद्यैः पञ्चशक्तिभिः ॥ ७७ ॥
कास्यहृद्गुह्यपादेषु कुर्याद् दूर्वाभिरर्पणम् ।
ततः सम्पूज्य संहृत्य दर्भैर्वस्त्रैश्च वेष्टयेत् ॥ ७८ ॥
तिथिहोमस्तु कर्तव्यस्तथा तिथ्यधिपस्य च ।
ऋक्षहोमो वारहोमस्तद्देवत्यश्च मन्त्रिणा ॥ ७९ ॥
मुहूर्तदेवताहोमो ग्रहहोमस्तथापरः ।
सम्पातं योजयेत् तत्र कलशे तु पुनःपुनः ॥ ८० ॥
गुरुर्मूर्त्तिधरैः सार्धं सम्पूज्य कलशं ततः ।
गृहीत्वा स्नापयेद् देवं कृत्वा पुण्याहमङ्गलम् ॥ ८१ ॥
वादित्रशङ्खनादैश्च जयशब्दैश्च संयुतम् ।
वैष्णवैश्च तदा सूक्तैर्जयशब्दैश्च नादयेत् ॥ ८२ ॥
गन्धपुष्पैश्च वस्त्रैश्च धूपदीपैश्च पूजयेत् ।
चतुर्विधं निवेद्यं च ततो देवाय कल्पयेत् ॥ ८३ ॥

---

१. 'कल्पये' ख. ग. पाठः.

बलिं च विकिरेद् यत्नाद् ब्राह्मणैः स्वस्ति वाचयेत् ।
एवं कृतेऽत्र तिथ्यृक्षवारराशिग्रहोद्भवाः ॥ ८४ ॥
नश्यन्ति सकला दोषास्तस्मात् कार्यं तु सर्वथा ।
यजमानं ततः पश्चाद् विष्णुकुम्भजलेन तु ॥ ८५ ॥
स्नापयित्वार्चनं कुर्यादाचार्यः स्वयमेव च ।
ततः स गुरुणा सार्धं पत्न्या पुत्रैस्तथानुजैः ॥ ८६ ॥
सितवस्त्रधरो भक्त्या देवं तमभिवादयेत् ।
त्रिधा कृत्वात्मनो वित्तं भागं देवाय कल्पयेत् ॥ ८७ ॥
भागं भार्यासुतादीनां भागमाचार्यदक्षिणाम् ।
प्रीतिदानं च दातव्यं पूजोपकरणानि च ॥ ८८ ॥
यो ददाति तदा किञ्चित् सर्वं बहुफलं भवेत् ।
धूपदीपादि संस्थाप्य देवागारं तु घट्टयेत् । ८९ ॥
नोद्घाटयेत् ततः पश्चात् त्रीण्यहानि तु कश्चन ।
दक्षिणान्नाद्यहोमैस्तु पूजा तत्र विधीयते ॥ ९० ॥
मन्त्रस्य प्रीणनं कुर्यात् स्थापिते पुरुषोत्तमे ।
घृतेन पयसा दध्ना शुद्धतोयेन वा सकृत् ॥ ९१ ॥
स्नापयित्वा तु कर्मार्चां चन्दनाद्यैः समालभेत् ।
भूषणैर्गन्धपुष्पैश्च धूपदीपैश्च शक्तितः ॥ ९२ ॥
निवेद्यैर्विविधैश्चापि ब्राह्मणानां च पूजनैः ।
प्रीणयेत् प्रयतो भक्त्या तमाचार्यं प्रसादयेत् ॥ ९३ ॥
दद्याच्च दक्षिणां तत्र विष्णुर्मे प्रीयतामिति ।
प्रतिष्ठापञ्चकेऽप्येवं विधिः साधारणः स्मृतः ॥ ९४ ॥

---

१. 'कृत्वा आ' कु. पाठः.

मन्त्रसंयोगभेदस्तु पूर्वमेव मयोदितः ।
ग्रामं परिभ्रमेद् रात्रौ दीपिकाशतसंयुतम् ॥ ९५ ॥
केतुभिर्विविधाकारैर्वितानैर्विविधैरपि ।
भेरीशङ्खनिनादैश्च जयशब्दैश्च संयुतम् ॥ ९६ ॥
बलिं च सर्वतो दद्यात् ततः शान्तिर्भविष्यति ॥ ९६½

इति विष्णुसंहितायां प्रतिष्ठापटलोऽष्टादशः ॥

---

## अथैकोनविंशः पटलः ।

अथ वक्ष्यामि संक्षेपात् प्रतिष्ठानन्तरक्रियाम् ।
पूर्ववत् स्थण्डिलान्यष्टौ होमार्थं दिक्षु कल्पयेत् ॥ १ ॥
उल्लेखनादिकं कृत्वा पूर्वोक्तविधिना क्रमात् ।
प्रणीय वैष्णवं वह्निं जुहुयुर्दिक्षु दीक्षिताः ॥ २ ॥
इन्द्रक्रतुमिति प्राच्यामग्निंदूतं हुताशने ।
नाकेसुपर्णं याम्यायां नैर्ऋत्यां मोषुणःपरा ॥ ३ ॥
यंरक्षन्तीति वारुण्यां वायवायाहि पावने ।
सोमंराजानमित्येवं सौम्ये शार्वे त्रियम्बकम् ॥ ४ ॥
पञ्च तारान् पुरोऽनूच्य प्रत्येकं पूर्वतः क्रमात् ।
अमीभिर्जुहुयुर्मन्त्रैः पक्वं विधिवदृत्विजः ॥ ५ ॥
पलाशखदिराश्वत्थप्लक्षन्यग्रोधबिल्वजाः ।
औदुम्बराश्च काश्मर्यः समिधोऽष्टशतं पृथक् ॥ ६ ॥
तावदाज्यान्नलाजादीन् हुत्वा शेषं समापयेत् ।
समिदादि यथालाभमिन्द्राद्यस्त्रैश्च होमयेत् ॥ ७ ॥

---

१. 'वायवे' क. ख. ग. पाठः.

इन्द्रादीन् होमयित्वैवं स्वमन्त्रैरष्टदिक्षु च ।
सम्पाताज्ययुतैस्तोयैर्घटस्थैर्मन्त्रसंस्कृतैः ॥ ८ ॥
संस्थाप्य पीठिकास्वेतान् गन्धाद्यैः पूजयेत् क्रमात् ।
स्कन्दमैन्द्र्यां प्रतिष्ठाप्य षण्मुखायेति विद्यया ॥ ९ ॥
शास्तारमग्नौ भांबीजं भूताधिपतये नमः ।
ब्राह्मी माहेश्वरी चैव कौमारी वैष्णवी तथा ॥ १० ॥
वाराह्यैन्द्री च चामुण्डी याम्ये वै सप्त मातरः ।
वीरभद्रगणेशाभ्यां सह प्राकारपार्श्वतः ॥ ११ ॥
वीरभद्रः स्वराः सर्वे सप्तवर्गास्तु मातरः ।
कूटो गणपतिश्चेति क्रमाज्ज्ञेया च मातृका ॥ १२ ॥
प्रणवेन स्वमन्त्रैर्वा नैर्ऋत्यां तु दिवाकरम् ।
घषोत्कायेति मन्त्रो वा हुतान्तस्तद्विधौ भवेत् ॥ १३ ॥
पश्चाद् ब्रह्मा स्वषट्केण तथान्यस्तत्सदित्यपि ।
ततो भूरिति बीजेन वैराहो वायुगोचरे ॥ १४ ॥
दुर्गा ह्रीङ्कारपूर्वेण सा नाम्नोत्तरतस्तथा ।
सश्रीधरहयास्या वा वागीश्वर्यादिमातरः ॥ १५ ॥
वागीश्वरी क्रिया कीर्त्तिर्लक्ष्मीः सृष्टिश्च पञ्चमी ।
विद्या कान्तिरिति ज्ञेयाः शङ्खचक्रगदाधराः ॥ १६ ॥
चतुर्थषष्ठौ बिन्द्वन्तौ द्वादशोऽथ त्रयोदशः ।
आद्यश्चैकादशो ज्ञेयो द्वितीयश्चैन्द्रगाः स्वराः ॥ १७ ॥
विष्वक्सेनोऽदितौ स्थाप्यः शङ्खचक्रगदाधरः ।
तर्जयन् वामतर्जन्या नासाग्रासन्नया जगत् ॥ १८ ॥

१. 'वा' ख. ग. पाठः

गन्धपुष्पैः समभ्यर्च्य शिष्टद्रव्यैस्तु याज्ञिकैः ।
देवोपयुक्तं पुष्पादि यत् प्रासादान्तरस्थितम् ॥ १९ ॥
तत् सर्वमस्मै दत्त्वान्ते वस्त्राभ्यां परिवेष्टयेत् ।
ईशानं चेशदिग्भागे स्वमन्त्रैः स्थापयेत् ततः ॥ २० ॥
कुमुदाद्याश्च पीठेषु पूर्वादिध्वजदेवताः ।
प्राकारात्तु बहिः स्थाप्याः पूज्याश्च बलिभिः क्रमात् ॥२१॥
बलिपीठे बलश्चाग्रे सगणो भूतनायकः[1]
स्थापयित्वार्चयित्वा च सर्वान् विज्ञापयेत् ततः ॥ २२ ॥
यावदत्र जगन्नाथो बिम्बमाश्रित्य तिष्ठति ।
तावदत्रैव रक्षार्थं यूयं तिष्ठत सर्वदा ॥ २३ ॥
अन्तर्मण्डलदण्डार्धदण्डे स्यादन्तहारका ।
मध्यहारा द्विदण्डा च चतुर्मर्यादभित्तिका ॥ २४ ॥
सप्तदण्डायता कार्या मर्यादाभित्तिका ततः ।
मुखायामस्त्रिभागेन पादेनार्धेन वा पुनः[2] ॥ २५ ॥
बलिपीठसमुत्सेधो गर्भागारप्रतेः समः ।
पूजापीठसमो वापि षड्नो वा प्रकीर्त्तितः ॥ २६ ॥
उत्सेधं दशधा कृत्वा सप्तांशस्तस्य विस्तरः ।
सप्तविंशतिधा कृत्वा सममेव तदुच्छ्रयम् ॥ २७ ॥
एकांशं पादुकं विद्यात्[3] चतुर्भिर्जगतीं पुनः ।
त्रिभागं कुमुदं चैव तथैकांशेन पट्टिकाम् ॥ २८ ॥
दशांशं कण्ठमित्याहुरंशाभ्यां कम्बुनिद्रवौ ।
त्रिभिः कपोतमित्याहुरेकांशेनाग्रपट्टिकाम् ॥ २९ ॥

१. 'श्च भूतेशाः पू', २. 'मृतः', ३. 'कुर्यात्' ख. ग. पाठः.

द्व्यंशकं पद्ममन्ते स्यादेतत् पीठस्य लक्षणम् ।
उत्तमाधममध्यत्वं बिम्बयोगात् प्रकल्पयेत् ॥ ३० ॥
उत्तमानां तु बिम्बानां वर्जिते मध्यमाधमे ।
वर्जिता पीठिकाश्चाष्टौ मध्यमाधमयोस्तथा ॥ ३१ ॥
पीठिकानां विपर्यासे कुलनाशो भवेद् यतः ।
स्वानां स्वानां विपर्यासो न कार्योऽतः सुखार्थिभिः ॥ ३२ ॥
उत्सेधनिर्गमौ तुल्यौ पादुकस्य प्रकीर्त्तितौ ।
जगतीकुम्भयोः सन्धौ तावदन्तर्गतं भवेत् ॥ ३३ ॥
भागं कुम्भोत्तरे कृत्वा भागार्धं पट्टिकां ततः ।
भागमेकं त्रिभागैकं कुर्याद् वै कण्ठपादुकम् ॥ ३४ ॥
भागार्धान्तर्गतं कण्ठं पादमात्रौ तु मेखला ।
विस्तारादष्टभागैकं पादविस्तार उच्यते ॥ ३५ ॥
चत्वारो द्वादशैवं वा कर्तव्याः कण्ठपादुकाः ।
कण्ठाग्रपट्टिकां कुर्याद् यथावत् कुम्भपट्टिकाम् ॥ ३६ ॥
भागं बाह्यगतं चैव वलभ्यर्धं तु भङ्गुरम् ।
अन्तर्भङ्गुरबद् भागं सलिलं सर्वतो भवेत् ॥ ३७ ॥
ऊर्ध्वं तु पट्टिका ज्ञेया पद्माकृतिरथान्तरे ।
तत्पीठं मध्यतः कृत्वा मण्डपं लक्षणान्वितं ॥ ३८ ॥
बीजाङ्कुरध्वजारोहबलिमङ्गलपूर्वकम् ।
उत्सवान्नाद्यपुण्याहस्थानशुद्ध्यादिसंयुतम् ॥ ३९ ॥
समन्तात् पीठविस्तारं लिखित्वा भद्रकाष्टकम् ।
कलशान् पूरयित्वाष्टौ घृतैर्धान्यैस्तु वाम्बुभिः ॥ ४० ॥

---

१, 'त्रं' क. पाठः.

सर्वरत्नसमायुक्तं वस्त्रयुग्मैस्तु वेष्टयेत् ।
लोहजं मृण्मयं वान्यं पीठस्योपरि कल्पयेत् ॥ ४१ ॥
भूतनाथस्य चारभ्य भूतानां च प्रदक्षिणम् ।
गन्धादिनार्चयित्वा तु फलैः पुष्पैश्च सर्वतः ॥ ४२ ॥
भक्ष्यभोज्यादिसंयुक्तं कलशांश्चैव पूर्ववत् ।
वस्त्रैः संवेष्टयेत् सर्वान् नवैः केशादिवर्जितैः ॥ ४३ ॥
होमार्थं तु द्विजा ग्राह्या अष्टौ चत्वार एव वा ।
स्वयं वैकं प्रकुर्वीत पूर्वोक्तविधिना गुरुः ॥ ४४ ॥
वेदाध्ययनसंयुक्तं तथा जागरणं निशि ।
प्रासादाभ्यन्तरे देवमाराध्य विधिपूर्वकम् ॥ ४५ ॥
बलिदानं यथाशक्ति सर्वं कृत्वा तु पूर्ववत् ।
सर्वेषां मूर्तिपाना तु होमयेन्मूलविद्यया ॥ ४६ ॥
यथा स्वनाममन्त्रेण समिदाज्यहवींषि च ।
लाजांश्च सर्षपांश्चैव तथा सक्तून् यवांस्तिलान् ॥ ४७ ॥
दधि क्षीरं तथा क्षौद्रं पुष्पाणि तु फलानि च ।
सर्वं साज्यं तु होतव्यं सर्वशान्तिकरं शुभम् ॥ ४८ ॥
अष्टोत्तरसहस्रं वा शतं वा होमयेत् पृथक् ।
दद्यात् पूर्णाहुतिं चात्र प्रतिद्रव्यं विधानतः ॥ ४९ ॥
शङ्खतूर्यादिसंयुक्तं दिक्षु भूतबलिं हरेत् ।
ओन्नमः प्राच्येभ्यो भूतेभ्यो विश्वभूतेभ्यः,
नमोऽस्तु विश्वरूपेभ्यो विरूपेभ्यश्च[1] वो नमः ॥ ५० ॥
ओम्
नमोऽस्तु दक्षिणेभ्यश्च भूतेभ्यः शार्ङ्गधन्वनः ।
नमो हाहाभ्यो भूतेभ्यः सर्वेभ्यो वो नमोनमः ॥ ५१ ॥

---

१. 'श्वरूपेभ्यश्च वो' क. पाठः.

ओन्नमः पाश्चात्त्येभ्यो भूतेभ्यो भैरवेभ्यो विष्णुपालकेभ्यो वियद्ग्रहोदरवर्तिभ्यो हुं[2] फट् ओं गच्छत ठठ[3] । विष्णुगणानामतो बलिमुपाहरामि भद्रं नो ददत प्रीणयत स्वाहा ।

ओन्नमो विष्णुभूतेभ्य उदीच्येभ्यः[4] सकलजन्तुहितकरेभ्यो विश्वपालकेभ्यो वो नमः स्वाहा ।

सुस्नातः स्वस्तिवाच्याथ ब्राह्मणानामनुज्ञया ।
देवस्य महतीं पूजां कृत्वा भक्त्या समाहितः ॥ ५२ ॥
वैनतेयं च सम्पूज्य परिवारं च शक्तितः ।
भूतनाथमथाराध्य मूर्त्तिपान् पूजयेत् क्रमात् ॥ ५३ ॥
अपूपसक्तुभिर्धानाफलभक्ष्यसमन्वितैः[5] ।
एतत्सर्वं क्रमात् कृत्वा ब्राह्मणानां च तर्पणम् ॥ ५४ ॥
दक्षिणा चात्र दातव्या ब्राह्मणेभ्यः स्वशक्तितः ।
गन्धपुष्पैरथाभ्यर्च्य[6] बलिपीठं समाहितः ॥ ५५ ॥
भूतनाथं प्रतिष्ठाप्य कुम्भतोयेन सेचयेत ।
इतरान् सेचयेद् दिक्षु मूर्त्तिपानां यथाक्रमम् ॥ ५६ ॥
आचार्यो यजमानश्च बलिपीठं प्रदक्षिणम् ।
अभ्यर्च्य गन्धपुष्पाद्यैः प्रणमेद् भूतनाथकम् ॥ ५७ ॥
पायसं कृसरं चैव गुलान्नं[7] घृतसंयुतम् ।
दध्ना मधुफलैर्युक्तं[8] पूजयेद् भूतनायकम् ॥ ५८ ॥

---

१. 'द्रहनोदार' क, 'द्रहनोद' ख. ग. पाठः. २. 'हू' ग. पाठः. ३. 'त गच्छत ठ' ख. पाठः. ४. 'भ्यो हुं फट् । ओं नमो विष्णुभूतेभ्य उ' ङ. पाठः. ५. 'मन्वितः ॥' क. पाठः. ६. 'गन्धतो' ख. ग. पाठः. ७. 'चित्रान्नं' ख. ग. घ. पाठः. ८. 'समायुक्तं' क. पाठः.

आचार्यो मूर्तिपालेभ्यो दक्षिणां दापयेत् ततः ।
पूर्ववत् स्नपनं कुर्याद् देवदेवस्य शक्तितः ॥ ५९ ॥
स्नानशेषैस्तु कुम्भस्थैराचार्यो मूर्त्तिपैः सह ।
प्रोक्षयेत् परिवारांस्तान् गन्धादिभिरथार्चयेत् ॥ ६० ॥

इति विष्णुसंहितायाम् एकोनविंशः पटलः ॥

## अथ विंशः पटलः ।

अथ वक्ष्यामि संक्षेपादुत्सवस्य विधिं परम् ।
स्थापितोऽपि विना येन प्रसीदति न केशवः ॥ १ ॥
अब्दमर्धं त्रिमासं वा मासं पक्षमसम्भवे ।
नवाहं वापि सप्ताहं पञ्चाहं नेष्यते परम् ॥ २ ॥
माघे वा मार्गशीर्षे वा चैत्रे वैशाख एव वा ।
पौषे वा फाल्गुने कुर्यादुत्सवं बहुविस्तरम् ॥ ३ ॥
प्रत्यब्दं नियतं कुर्याच्छक्त्या सर्वार्थसाधनम् ।
पुण्याहेनोत्सवारम्भे ध्वजस्थापनमाचरेत् ॥ ४ ॥
सप्ताह्निकचतुष्कादौ मङ्गलाङ्कुररोपणम् ।
श्रवणान्तं तु संकल्प्य तीर्थस्नानावसानिकम् ॥ ५ ॥
कारयेदुत्सवं भक्त्या विष्णोर्विष्णुपरायणः ।
स्थापयेदुत्सवारम्भे ध्वजं गरुडलक्षणम् ॥ ६ ॥
दिक्षु चाष्टौ यथान्यायं पताकादीन् समुज्ज्वलान् ।
ध्वजोत्थाने कृते किञ्चिन्न विघ्नैरभिभूयते ॥७॥
कलशेन समं कार्यं ध्वजस्यारोहणं तदा ।
पूर्ववन्मण्डपं कृत्वा वेदिं च सुपरिश्रिताम् ॥ ८ ॥

१. 'र्थं', २. 'न्धपुष्पैर' ख. ग. पाठः.

अग्नेश्च जननं कुम्भमूर्त्तिपानां च कल्पनम् ।
ध्वजदण्डः समः कार्यो दृढो व्रणविवर्जितः ॥ ९ ॥
कर्मान्तरानियुक्तश्च न शुष्कः पतितः स्वयम् ।
पुष्यादियोगे सङ्ग्राह्यः सुलग्ने शकुनैः शुभैः ॥ १० ॥
ब्राह्मणैः स्वस्तिवाच्यादौ शुचिः स्नातः स्वलङ्कृतः ।
तथाविधैर्द्विजैर्युक्तो जयशब्दादिसंयुतः ॥ ११ ॥
मध्वाज्याक्तकुठारेण पूर्वोत्तरमुखो गुरुः ।
छित्त्वा वंशमुपानीय कलशैः स्नापयेच्छुभैः ॥ १२ ॥
मृत्कषायौषधीतीर्थैर्गन्धपुष्पैश्च पूजयेत् ।
पताका च शुभा कार्या सिता तदवलम्बिनी ॥ १३ ॥
स्याद् देवागारशिखरत्रिभागसमलम्बिनी[1] ।
दर्भैरावेष्टिता घण्टाचामरादर्शसंयुता ॥ १४ ॥
सम्मुखं लेखयेत् तत्र विनताकुलनन्दनम् ।
आजानुनाभिकण्ठाग्रं सितपीतारुणासितम् ॥ १५ ॥
दुर्निरीक्षं सुरैर्दैत्यैर्ज्वालान्वितविलोचनम ।
अनन्ताद्यष्टनागेन्द्रधरं नीलाग्रनासिकम् ॥ १६ ॥
सहस्रादित्यसंकाशं मनसावाह्य विन्यसेत् ।
पूजयेद् गन्धपुष्पैश्च मन्त्रेणानेन मन्त्रवित् ॥ १७ ॥
तारादिः पक्षिराजायहुतान्तोऽष्टाक्षरस्तु यः ।
सम्बुद्धिरूप एव स्यादावाहनविसर्गयोः ॥ १८ ॥
चन्दनस्रग्बलि ध्यानैः शयनेऽभ्यर्च्य वासयेत् ।
होमं च विधिवत् कुर्याद् वर्गाद्यैः कादिशान्तगैः ॥

१. 'समार्जनी' इति मूलपाठः

हुतान्तैः प्रणवाद्यैश्च तिलान् व्रीहिसमन्वितान् ।
चतुर्भिरक्षरैर्दिक्षु चवर्गानन्तैर्विना ॥ २० ॥
अष्टोत्तरसहस्रं तु वैनतेयपदान्वितैः ।
आज्याक्तं होमयेत् सर्वं निवेद्यं च चतुर्विधम् ॥ २१ ॥
बलिं च परितो दद्याद् भूतानां ध्वजवासिनाम् ।
अनेककोटिसंख्यानां भूतानां चापि पार्षदाम् ॥ २२ ॥
प्रभातेऽभ्यर्चयित्वैवं ब्राह्मणांश्चैव[1] तर्पयेत् ।
ध्वजवाहनभूतोऽसौ विष्णोर्विष्णुपराक्रमः ॥ २३ ॥
सुपर्णः प्रीयतां मह्यं विनताकुलनन्दनः ।
इत्युच्चार्य ततो गच्छेद् देवतायतनं प्रति ॥ २४ ॥
ध्वजमादाय तैः सार्धं देवमूर्त्तिधरैर्द्विजैः ।
वेदतूर्यादिनिर्घोषैः सुलग्ने स्थापयेद् ध्वजम् ॥ २५ ॥
मुक्तागारुडहेमानि गर्त्ते विन्यस्य रोहयेत् ।

ओन्नमोऽष्टकुलनागभूषणाय नागशोणितलिप्ताङ्गाय सप्तपातालवासिजनविक्षोभणकराय महाशैलसञ्चालनायारुण-क्रनीयसे पुरुषोत्तमवाहनाय विनतानन्दकराय त्रैलोक्यवि-क्षोभणाय देवदानवगन्धर्वोरगमथनायामृतमथनाय मातुरर्थे नागमोहनाय हन हन विघ्नान् नाशय स्वाहा ।

अनेन स्तुतिमन्त्रेण स्तुत्वा तं विहगेश्वरम् ॥ २६ ॥
सान्निध्यं कल्पयेत् तस्य पक्षिराजस्य सर्वदा ।
ततः प्रभृति तत्स्थानं नोपसर्पन्ति राक्षसाः ॥ २७ ॥
पिशाचा दन्दशूकाश्च तस्मात् कार्यो ध्वजोच्छ्रयः ।
स्नपनं चात्र कर्तव्यं प्रासादस्य तथैव[2] च ॥ २८ ॥

१. 'बा' क. ख. पाठः २. 'ध्वजस्य च' ख. ग. घ. पाठः

कलशं पूरयेच्छुभ्रं फलैर्नानाविधैः शुभैः ।[1]
सर्वधान्यैस्तथा शुक्लैः कुसुमैश्च सुगन्धिभिः ॥ २९ ॥
तत्त्वानां तु यथा न्यासै[2]स्तदुक्तं प्रथमं तव ।
यजमानोऽनुगैः सार्धं ध्वजमन्दिरयोः पुनः ॥ ३० ॥
प्रदक्षिणं त्रिधा कृत्वा गच्छेदवभृथं ततः[3] ।
शुभं तीर्थं प्रविश्यात्र गङ्गामावाहयेत् पुनः[4] ॥ ३१ ॥
देवि ! विष्णुपदे ! शुद्धे ! सर्वपापव्यपोहिनि ! ।
नन्दनीत्येव ते नाम नलिनी मालिनीति च ॥ ३२ ॥
दक्षापत्या च विहगी सर्वभूतप्रियेति च ।
शरणं त्वां प्रपन्नोऽस्मि पापान्मोचय मा चिरम् ॥ ३३ ॥
ध्यात्वा जपन्निमं मन्त्रं वारि विक्षोभ्य पाणिना ।
मज्जेद् येऽन्येऽत्र मज्जन्ति सर्वे ते स्युरकल्मषाः ॥ ३४ ॥
मूलाङ्गैस्तर्पयेत् तत्र मुनीन्[5] देवान् ऋषींस्तथा ।
पार्षदांश्च भवेत् तृप्तिस्तेषां द्वादशवार्षिकी ॥ ३५ ॥
दीक्षान्ते च प्रतिष्ठान्ते कुर्यादवभृथं तथा ।
सर्वतीर्थ[6]समं पुण्यं भवत्येव न संशयः ॥ ३६ ॥
ध्वजानन्यांस्तथा स्थाप्य दिशापालाङ्कचिह्नितान् ।
स्वमन्त्रैः पूजयेद् दिक्षु सर्वेभ्यश्च बलिं हरेत् ॥ ३७ ॥
ग्रामवीथीश्च सम्मृज्य प्रोक्ष्य गन्धोदकैस्ततः ।
समन्ताद् विकिरेत् पुष्पैः शोभनैश्च सुगन्धिभिः ॥ ३८ ॥

---

१. 'भिः । स्नपनं तेन कर्तव्यं प्रासादस्य ध्वजस्य च । तत्त्वा' ङ. पाठः. २. 'सं तदु' क. ख. घ. पाठः. ३. 'पुनः' क. ख. पाठः. ४. 'ततः ।' ङ. पाठः. ५. 'सर्वान्', ६. 'र्थमयं पु' ख. ग. पाठः.

ग्रामपर्यन्तदेशे च ग्रामान्तश्चत्वरेषु च ।
चैत्यारामेषु गोष्ठेषु देवतायतनेषु च ॥ ३९ ॥
तोरणैश्च पताकाभिर्मण्डलैश्चोपशोभयेत् ।
कदलीनालिकेरेक्षुपूगपुष्पफलद्रुमैः ॥ ४० ॥
दीपप्रासादयन्त्रैश्च कुर्याच्छोभां समन्ततः ।
सवनेषु बलिं दद्याद् गन्धपुष्पादिसंयुतम् ॥ ४१ ॥
पूजयित्वा यथान्यायमुत्सवेषु विशेषतः ।
संस्नाप्य शुद्धतोयैश्च पयोदध्याज्यगन्धकैः ॥ ४२ ।
गव्यैश्च नालिकेराद्भिर्लिप्त्वा गन्धैः सुयोजितैः ।[1]
हृद्यैः सुधूपितैश्चित्रैः परिधाप्य नवांशुकैः ॥ ४३ ॥
पुष्पैर्मनोहरैः पुण्यैर्विविधैश्च विशेषतः ।
मालास्रग्भिः समन्ताच्च सन्धूप्यायःपुरादिभिः ॥ ४४ ॥
सरत्नहेमभूषाभिर्भक्त्या दीपैश्च पूजयेत् ।
स्वादुभिः सोपदंशैश्च प्रभूतैराज्यसंयुतैः ॥ ४५ ॥
चतुर्विधैर्दधिक्षीरगुलाद्यैश्च निवेद्यकैः ।
गीतसङ्गीतवादित्रबहुलं भक्तहर्षणम् ॥ ४६ ॥
विविधान्नाद्यभूयिष्ठमुत्सवं कारयेत् ततः ।
कृत्वा नित्यबलिं दद्यात् तत्रोत्सवबलिं पुनः ॥ ४७ ॥
विशेषेण च कर्तव्यं सर्व[2]मङ्गलसंयुतम् ।
स्त्रियो द्विजाश्च हृष्टाश्च भक्ताश्च जयपाठकाः ॥ ४८ ॥
देवस्य परितो गत्वा मुच्यन्तेऽखिलपातकैः ।
नृत्तगीतादिभिश्चात्र विशालं कुर्युरुत्सवम् ॥ ४९ ॥

---

१. 'योजितैः', २. 'वैं' ख. ग, पाठः.

शनैः प्रदक्षिणं गच्छेद् बलिं दद्याच्च देशिकः ।
यावन्त्युत्सवक्लृप्तानि दिनान्येवं समाचरेत् ॥ ५० ॥
गन्धपुष्पाक्षतैः स्रग्भिः फलैश्च विविधैः शुभैः ।
किरेयुः कौतुकं भक्ताः कालचक्रमथापि वा ॥ ५१ ॥
एवं त्रिधा परिभ्रम्य षडहानि यथाविधि ।
सप्तमेऽह्नि ततः कुर्यात् पुष्पयागं हरिप्रियम् ॥ ५२ ॥
पूर्वेद्युर्भूशयो भूत्वा नियतात्मा हविष्यभुक् ।
उपोष्य निशि देवस्य कुर्यात् कौतुकबन्धनम् ॥ ५३ ॥
कर्मार्चां तु समाराध्य मण्डपे समलङ्कृते ।
प्ररोहघटिकाभिस्तु शरावैर्दिग्विदिग्गतैः ॥ ५४ ॥
वैष्णवैः कारयित्वा तु घृतारोपणमादितः ।
जयमङ्गलघोषैस्तु प्रदर्श्यादर्शमङ्गलम् ॥ ५५ ॥
जितं त इति बध्नीयात् कौतुकं दक्षिणे करे ।
आचार्यस्यापि कर्तव्यं तदा कौतुकबन्धनम् ॥ ५६ ॥
चामरैस्तालवृन्तैश्च वीजयेन्मङ्गलान्वितम् ।
शयने सन्निवेश्यार्चामनिर्वाणप्रदीपकैः ॥ ५७ ॥
रात्रिशेषं समासीत सन्धूप्याथःपुरादिभिः ।
प्रातः स्नात्वार्चयित्वा च कृत्वा मङ्गलवाचनम् ॥ ५८ ॥
ग्रामप्रदक्षिणं चात्र पिष्टचूर्णानि कारयेत् ।
उलूखले नवे शुद्धे दूर्वादिभिरलंकृते ॥ ५९ ॥
वैष्णवीभिस्तु दासीभिर्द्विजैर्वा सुशुभानि तु ।
लिप्त्वाज्येन तु तामर्चां मूलबिम्बमथापि वा ॥ ६० ॥

१. 'कुर्याच्च' ख. ग. पाठः.

हेमचूर्णादिभिः सम्यक् परिमृज्य समन्ततः ।
हरिद्रामुद्गसम्मिश्रैर्भक्तानां मूर्ध्नि विन्यसेत् ॥ ६१ ॥
गन्धचूर्णैश्च विमृजेत् प्रतिमां तद्वदेव तु ।
स्नापयेद् वेदिकामध्ये पूरितैस्तीर्थवारिभिः ॥ ६२ ॥
गन्धतोयैश्च दातव्यं भक्तानां मूर्ध्नि तज्जलम् ।
दत्त्वा सुवर्णचूर्णं च पूजयेद् विधिना पुनः ॥ ६३ ॥
स्नात्वाचम्य पुनर्वेद्यां शोधितायां समन्ततः ।
चतुस्तोरणयुक्तायां विकिरेत् सर्षपाक्षतैः ॥ ६४ ॥
कलशैरङ्कुरैर्दीपैर्दर्पणाद्यैश्च भूषयेत् ।
दामानि लम्बयेत् तत्र मुक्तादामानि चाभितः ॥ ६५ ॥
कुम्भेशवर्धनीभ्यां तु कृत्वादौ भूपरिग्रहम् ।
पूर्ववत् सूत्रयित्वात्र कारयेत् पुष्पमण्डलम् ॥ ६६ ॥
पञ्चवर्णैः शुभैः पुष्पैरम्लानैश्च सुगन्धिभिः ।
मन्दारपीतकोरण्डैः पद्मबिल्वदलैरपि ॥ ६७ ॥
जपादिवर्जितैः शुद्धैर्यथावर्णविभागतः ।
मध्ये सकर्णिकं पद्ममष्टपत्रं सुशोभनम् ॥ ६८ ॥
षड्भिर्द्वादशभिर्वापि[1] दलैर्युक्तं प्रकल्पयेत् ।
पीतैस्तु कर्णिका कार्या रक्तवर्णैस्तु केसराः ॥ ६९ ॥
हरितैः सन्धयश्चात्र शुक्लैरेव[2] दलानि तु ।
भद्रकं वा लिखेत् तत्र चक्राब्जं वा यथारुचि ॥ ७० ॥
बहिरावरणे चाष्टौ पद्मान्यष्टदलानि तु ।
मूर्त्तीनां चाथ देवीनां तथा पुष्पमयान्यथ ॥ ७१ ॥

---

१. 'त्र' क. पाठः. २. 'रष्टद' ख. ग. पाठः.

मुद्राणां लोकपालानां तथैवावरणद्वये ।
आदिपद्मार्धमानेन मूर्त्तिपद्मानि कल्पयेत् ॥ ७२ ॥
तदर्धेन तु मुद्राणामिन्द्रादीनां प्रकल्पयेत् ।
तावता वैनतेयस्य विष्वक्सेनस्य चैव हि ॥ ७३ ॥
पश्चिमं वाहयेद् द्वारं वीथीश्च परितो भवेत्(?)।
पुष्पदन्तप्रदेशे स्यात् सञ्चारो मूर्त्तिधारिणाम् ॥ ७४ ॥
एवं पुष्पमयान्येव कुर्यात् पद्मानि सर्वशः ।
द्वारादिकं बहिः सर्वं यथाशोभं प्रकल्पयेत् ॥ ७५ ॥
योगपीठं तु सम्पूज्य सगात्रं सपरिच्छदम् ।
प्रतिमामादिपद्मस्य कर्णिकायां निवेशयेत् ॥ ७६ ॥
पूजयेत् पूर्ववद् देवं न्यासं कृत्वा यथाविधि ।
मूर्त्तिशक्त्यस्त्रलोकेशाः पूज्याः पद्मेषु तेषु च ॥ ७७ ॥
गन्धैः पुष्पैश्च धूपैश्च दीपैरन्नैश्च शोभनैः।
पूजयित्वा यथान्यायमग्निकार्यं समारभेत् ॥ ७८ ॥
चतस्रः पालिकाः पूर्वमग्नेः कृत्वा चतुर्दिशम् ।
चतुरश्च चरून् कृत्वा यथावित्तानुसारतः ॥ ७९ ॥
पूर्ववत् संस्कृते वह्नौ चतुर्धैकं विभज्य वा ।
कृत्वोपस्तरणादीनि प्रथमं तु निवेदयेत् ॥ ८० ॥
द्वितीयं जुहुयादग्नौ घृताक्तं प्राग्वदेव तु ।
तृतीयं परिवारेभ्यो दत्त्वान्ते बलिमेव च ॥ ८१ ॥
चतुर्थं प्राशयेत् साज्यं शेषं कृत्वा तु पूर्ववत् ।
हिरण्यं दक्षिणां दद्याद् ब्राह्मणांश्चैव भोजयेत् ॥ ८२ ॥

---

१. 'तः' क. ख. पाठः.

नृत्तगीतादिभिः स्तोत्रैर्वेदनादैश्च पुष्कलैः ।
पूजनैर्वैष्णवानां च प्रीणयेदखिलेश्वरम् ॥ ८३ ॥
द्वादश्यां श्रवणेऽप्येवं कुर्याद् यागं विचक्षणः ।
सप्तमे सप्तमे कुर्याद् विष्णुयागमतन्द्रितः ॥ ८४ ॥
संवत्सरं तथा कृत्वा[2] विष्णुलोके महीयते ।
अयने विषुवे चैत्र सोमसूर्यग्रहे तथा ॥ ८५ ॥
संक्रमे विष्णुपञ्चम्यां कृत्वेष्टं प्राप्नुयात् फलम् ।
प्रथमे दिवसे रात्रौ कुर्याद् ग्रामप्रदक्षिणम् ॥ ८६ ॥
अह्नि प्रदक्षिणं कुर्याच्छेषेषु दिवसेषु च ।
बलिं च सर्वतो दद्याद् भूतेभ्योऽन्तर्बहिस्तथा ॥ ८७ ॥
परिभ्रमणकाले च मण्डलेषु बलिं हरेत् ।
कौतुकस्य पुरस्तात् तु गन्तव्यं बलिदायिभिः ॥ ८८ ॥
गन्धपुष्पादिसंयुक्तं जलदानसमन्वितम् ।
बलिविक्षेपणं कुर्याद् बलिमुद्रां च दर्शयेत् ॥ ८९ ॥
कुमुदादिध्वजेशानां[3] पञ्चाशद्गणनायकाः ।
भवन्ति शतशस्तेषां तथैव च सहस्रशः ॥ ९० ॥
तेषामयुतशस्तेषां लक्षशः कोटिशस्ततः ।
असंख्येयाश्चरन्त्येते ग्रहाश्चाष्टविधा भुवि ॥ ९१ ॥
देवासुराश्च गन्धर्वा यक्षाः पितृगणास्तथा ।
नागा रक्षःपिशाचाश्च कुमुदादिगणाः क्रमात् ॥ ९२ ॥

१. 'वा', २. 'भू' क. ख. पाठः. ३. 'जे पञ्चपञ्चा' ङ. पाठः. ४. 'ग्राः' ग. पाठः.

तत्र पञ्चाशदाख्या ये चतुश्शतमहागणाः ।
चत्वारिंशत्सहस्रं तु ये तेषां परिचारकाः ॥ ९३ ॥
तेषां तु पूजया सर्वे शमं यान्ति न संशयः ।
विविधा विविधे स्थाने तिष्ठन्तो विविधायुधाः ॥ ९४ ॥
विविधैर्भयरोगाद्यैर्बाधन्तेऽतिक्रमे नरान् ।
वैष्णवीभिस्तु विद्याभिर्निवर्त्या नान्यथा क्वचित् ॥ ९५ ॥
कुमुदादिगणेशानां बलिं दद्यात् तु नित्यशः ।
गणानां परिवाराणामुत्सवेषूत्सवेषु च ॥ ९६ ॥
चत्वारिंशत्सहस्राणां[2] दत्त्वा पीठे समापयेत् ।
ओं नमः पार्षदेभ्यश्च दद्याच्छेषं जलाप्लुतम् ॥ ९७ ॥
भूमौ प्रतिदिशं चात्र दद्याच्छान्तिकरं सदा ।
तीर्थस्नानदिनात् पूर्वेदिने[3] कृत्वा महोत्सवम् ॥ ९८ ॥
विघ्नेशं देवताश्चान्यास्तत्र यत्नेन पूजयेत् ।
तत्र सायं परिभ्रम्य दत्त्वा चैव महाबलिम् ॥ ९९ ॥
प्रविश्य देवमाचार्यः प्रार्थयेत् सुसमाहितः ।
तीर्थयात्रा त्वया देव! श्व कर्तव्या सुरेश्वर! ॥ १०० ॥
तत्र प्रतिसरारम्भं त्वमनुज्ञातुमर्हसि ।
लब्धानुज्ञस्तु निर्गम्य यजमानसमन्वितः ॥ १०१ ॥
ततः कौतुकबन्धादि कर्त्तव्यं सर्वमाचरेत् ॥ १०१½ ॥

इति विष्णुसंहितायामुत्सवपटलो विंशः ॥

---

१. 'वा' क. ख. पाठः. २. 'णां बलिपीठे क' पाठः. ३. 'वै' क. ख. ग. ङ. पाठः.

## अथैकविंशः पटलः ।

अथ वक्ष्यामि संक्षेपाद् यात्रामस्य शुभाशुभाम् ।
तीर्थयात्रा शुभा ज्ञेया साशुभा या स्वमन्दिरे ॥ १ ॥
पूर्वेद्युरुत्सवं कृत्वा निशि दद्यान्महाबलिम् ।
विष्णुपारिषदेभ्यश्च प्रमथेभ्यो नमोनमः ॥ २ ॥
मातृभ्यस्तद्गणेभ्यश्च सर्वेभ्यो वै नमोनमः ।
इत्येवं सर्वतो दत्त्वा प्रविश्य प्रार्थ्य पूर्ववत् ॥ ३ ॥
पीठे सास्तरणे देवं पुण्याहस्वस्तिवाचनैः ।
कृतकौतुकमाराध्य ततः स्तोत्रादि कीर्तयेत्[1] ॥ ४ ॥
स्नातः स्वलङ्कृतः प्रातः कृत्वा यागं पुरोदितम् ।
षड्भिः कनिक्रदत्पूर्वैर्[2]हुत्वा स्वस्त्यादिपञ्चकैः[3] ॥ ५ ॥
मूलेनाष्टशतं चैव समिदाज्यचरून् क्रमात्
शकुनानि[4] परीक्ष्याथ स्नानयात्रां प्रयोजयेत् ॥ ६ ॥
रथं वा कुञ्जरं वास्य यात्रावाहनमानयेत् ।
नानावादित्रकुशलान् बहूंश्च परिचारकान् ॥ ७ ॥
छत्रध्वजपताकाश्च भटान् दासांश्च भक्तकान् ।
ब्राह्मणांश्च समानीय मुहूर्ते शोभने गुरुः ॥ ८ ॥
पुण्याहं वाचयित्वात्र प्राप्तानुज्ञो द्विजोत्तमैः ।
देवं प्रदक्षिणीकृत्य प्रणिपत्य पुरः स्थितः ॥ ९ ॥
पीठे विन्यस्य कर्मार्चां कार्यं विज्ञापयेच्छनैः ।
कर्मार्चा तीर्थयात्रार्थं तवेयं कल्पिता हरे ! ॥ १० ॥

---

१. 'जयेत्' ग. पाठः. २. 'वैः कृत्वा' ख. ग. पाठः. ३. 'भिः' क. ख. ङ. पाठः. ४. 'दि' क. पाठः.

तीर्थयात्रां कुरुष्वास्यां संक्रम्यानुग्रहाय नः ।
ततः संहृत्य तांमर्चामुत्पाद्यं विधिपूर्वकम् ॥ ११ ॥
तस्यामावाहयेद् देवं पञ्चोपनिषदैः क्रमात् ।
आवाहितमनुस्मृत्य दत्त्वार्घ्यं प्रतिपूज्य च ॥ १२ ॥
सदशेन नवेनैव वस्त्रयुग्मेन वेष्टयेत् ।
सोष्णीषः सोत्तरीयश्च कृतन्यासः समाहितः ॥ १३ ॥
दक्षिणेन तमादाय पाणिना वाग्यतः स्वयम् ।
शिष्यैः परिवृतो गच्छेन्मण्डपं समलंकृतम् ॥ १४ ॥
तत्र मङ्गलवादं तु सर्वमङ्गलसंयुतम् ।
कुर्यादत्र द्विजाः सर्वे वदेयुश्च तथास्त्विति ॥ १५ ॥
मण्डपद्वारमासाद्य दत्त्वार्घ्यं सह मूर्त्तिपैः ।
गेहं प्रदक्षिणीकृत्य ततो गच्छेद् बहिः पुनः ॥ १६ ॥
उदकुम्भं हविश्छत्रं यांगोपकरणानि च ।
प्ररोहघटिकाश्चान्ये धारयेयुर्द्विजोत्तमाः ॥ १७ ॥
बहिर्निर्गम्य घोषेण महता वाग्यतः स्वयम् ।
वाहनं गरुडं ध्यात्वा पूजयित्वाधिरुह्य तम् ॥ १८ ॥
गच्छेत् तु योजनादर्वाङ् नदीं वान्यजलाशयम् ।
दिङ्मन्त्रेण बहिस्सालं कृत्वा पूर्वं प्रदक्षिणम् ॥ १९ ॥
गच्छेयुर्वाग्यताः सर्वे सोत्तरीयाः स्वलंकृताः ।
पथि घोषं जना वाद्यैर्गीतनृत्तरवैस्तथा ॥ २० ॥
वाहनैर्विविधैश्चापि कुर्वीरन् देवतुष्टये ।
तोरणाभ्यन्तरे गत्वा मण्डपं तीर्थपार्श्वतः ॥ २१ ॥

---

१. 'कर्मार्चा' क. ख. पाठः. २. 'द्य' ङ. पाठः. ३. 'यो' क. ख घ. ङ. पाठः.

वेदिं परिश्रितां कृत्वा पीठे देवं निवेशयेत् ।
दीक्षितैः पाचयित्वात्र पायसं विजने क्वचित् ॥ २२ ॥
दत्त्वा पाद्यादि सर्वेण तमादाय नदीं व्रजेत् ।
वारिणा तीर्थमावाह्य वैष्णवं तत्र पावनम् ॥ २३ ॥
तीर्थे त्रिधा निमज्ज्यास्मिन् मन्त्रेण परमेष्ठिना ।
निवेश्य पीठे दत्त्वार्घ्यं पाद्यमाचमनं तथा ॥ २४ ॥
आपोहिष्ठादिभिः प्रोक्ष्य पञ्चभिश्च समाहितः ।
तमादाय पुनर्मज्जेत् तोये कृत्वाघमर्षणम् ॥ २५ ॥
तत्र स्नानं महापुण्यं सर्वपापहरं विदुः ।
पीठे निवेश्य वस्त्रे द्वे परिधाय नवे स्वयम् ॥ २६ ॥
आचम्य तु कृतन्यासः पूजयेद् विधिना पुनः ।
आज्ययुक्तं निवेद्यं च दत्त्वास्मै विधिपूर्वकम् ॥ २७ ॥
तीर्थेऽस्मिन् वैष्णवे पुण्ये स्नातोऽसि पुरुषोत्तम ! ।
अतस्त्वमनुगृह्णीष्व [1]सत्रस्थानोपाश्रयेण नः ॥ २८ ॥
इति प्रार्थ्य तमादाय पूर्ववद् वाहनं नयेत् ।
तमारुह्य यथापूर्वं प्रासादमशनैर्नयेत् ॥ २९ ॥
यात्राह्न[2]येव गृहं प्राप्य बिम्बे संक्रामयेत् ततः ।
दोषोऽन्यथा महानत्र कर्तृणां भवति ध्रुवम् ॥ ३० ॥
गत्वा गर्भगृहं पीठे निवेश्य सुसमाहितः ।
तोये[3]न गन्धपुष्पैश्च बुद्ध्यावाह्य समन्त्रकम् ॥ ३१ ॥
मूलबिम्बे यथान्यायं सर्वेण प्रतिरोपयेत् ।
यात्रादावन्ततश्चैवमावाहनाविधिः स्मृतः ॥ ३२ ॥

---

१. 'स्नापनोपा' ङ. पाठः. २. 'त्रा ह्येवं गृ'. ३. 'ये सगन्धपुष्पे तु बु' ङ. पाठः.

सकलीकृतमाराध्य दत्त्वार्घ्यं प्रणिपत्य च ।
निर्गच्छेद् द्वारमावृत्य ब्राह्मणांश्चात्र भोजयेत् ॥ ३३ ॥
निशि दद्याद् बलिं चैवं शुभयात्रा मयोदिता ।
अशुभा वास्तुसिद्ध्यर्था कथ्यमानावधार्यताम् ॥ ३४ ॥
प्रासादे शिथिले जीर्णे मृद्बिम्बे चित्र एव वा ।
निष्क्रामयेन्नवे गेहे विधिनानेन देवताम् ॥ ३५ ॥
पर्जन्ये वा जयन्ते वा दित्यदित्योश्च सम्भवात् ।
प्राग्द्वारे पश्चिमद्वारे मृगदौवारिकास्थितम् ॥ ३६ ॥
प्रासादाभिमुखद्वारमल्पगेहं नवं शुभम् ।
एकभूमिकमग्रीवं मृद्भिः काष्ठैरथापि वा ॥ ३७ ॥
पीठं काष्ठमयं रम्यं सश्वभ्रं कारयेत् ततः ।
कुर्याल्लोहमयं बिम्बं दारवं वास्त्रमापदि ॥ ३८ ॥
कृते कालावधौ सम्यक् संक्रामणमिहेष्यते ।
मासादि द्वादशाब्दान्तं कालमत्र प्रचक्षते ॥ ३९ ॥
नवं गेहं तु संशोध्य सर्वं कृत्वाथ पूर्ववत् ।
राक्षोघ्नमादितः कृत्वा सर्वकर्माण्यतश्चरेत् ॥ ४० ॥
स्थापनोक्तविधानेन मण्डपं कारयेत् पुनः ।
ध्वजतोरणसंयुक्तं मण्डयेदङ्कुरादिभिः ॥ ४१ ॥
गव्यैरस्त्रेण सम्प्रोक्ष्य मध्ये स्वस्तिकमालिखेत् ।
व्रीहिभिः स्थण्डिलं कृत्वा तस्मिन् वासोभिरास्तरेत् ॥
तण्डुलान् निक्षिपेत् तस्मिन् कम्बलादिभिरास्तरेत् ।
कुशैर्वस्त्रैश्च पुष्पैश्च गन्धादिभिरथार्चयेत् ॥ ४३ ॥

१. 'स्तु' ब. पाठः.

जलेऽधिवास्य कर्मार्चां प्रक्षाल्य सलिलैः शुभैः ।
मृत्तोयैः पत्रतोयैश्च कषायैर्गव्यपञ्चकैः ॥ ४४ ॥
गन्धपुष्पैरलंकृत्य वस्त्रैराच्छाद्य शा[1]ययेत् ।
शङ्खभेर्यादिनादेन गन्धपुष्पादिसंयुतम् ॥ ४५ ॥
आ सप्तरात्रात् सन्ध्यासु देवताभ्यो बलिं हरेत् ।
शृण्वन्तु देवताः सर्वाः प्रासादमिममाश्रिताः ॥ ४६ ॥
यदुच्यमानमस्माभिरनुगृह्णन्तु तेन नः ।
पूर्वैः पूर्वं कृतमिदं देवालयमसारवत् ॥ ४७ ॥
प्राप्तं कालवशाद् भूयो वयं तत् कर्तुमुद्यताः ।
कालेनैतावता भूयः प्रासादेऽस्मिन् पुनर्नवे ॥ ४८ ॥
प्रापयामो वयं सत्यमित्युक्त्वा घोषयेद् बुधः ।
मासादर्वाक् तु कालश्चेत् तत्र संकोच इष्यते ॥ ४९ ॥
प्रासाददेहसंस्थानि सर्वतत्त्वान्यनुक्रमात् ।
देवताश्च तथा हृत्वा परिवारसमायुतम् ॥ ५० ॥
ध्यात्वा संहारमार्गेण यथावद् देशिकोत्तमः ।
तेजोरूपं तु तत् सर्वं मूलबिम्बे नियोजयेत् ॥ ५१ ॥
तदूर्ध्वं च तथा कृत्वा संक्रामयितुमारभेत् ।
प्रविश्य गर्भगेहं तु मूर्तिपैः सहितो गुरुः ॥ ५२ ॥
पुण्याहं वाचयित्वाथ[2] ब्राह्मणैः स्वस्ति वाचयेत् ।
देवस्य महतीं पूजां कृत्वा भक्त्या यथाविधि ॥ ५३ ॥
प्रणिपत्यं पुरः स्थित्वा कार्यं विज्ञापयेच्छनैः ।
भगवन्! वास्त्वभिनवं बिम्बं[3] च तत्र शोभनम् ॥ ५४ ॥

१. 'शोधये' ङ. पाठः. २. 'त्र' ख. ग. पाठः. ३. 'म्बं तव सुशो' क. ख. पाठः.

कारयिष्यन्ति ते भक्तास्तदनुज्ञातुमर्हसि।
क्लेशवासस्त्वया देव! रोचनीयोऽल्पके गृहे ॥५५॥
यावन्नवं शुभं कृत्वा पुनः संस्थापयामहे।
ततो लोहमयं कुम्भं शोधितं सूत्रवेष्टितम् ॥ ५६॥
देवस्य पुरतो न्यस्य सपवित्राक्षतादिकम् ।
ततो निर्गम्य तैः सार्धं बिम्बसंस्कारमारभेत् ॥ ५७ ॥
संहारसृष्टियोगेन ध्यात्वा तत्त्वान्य[1]नुक्रमात् ।
जननादिक्रमाद्धुत्वा तत्त्वान्यग्नौ यथाविधि ॥ ५८ ॥
निर्गत्य पृच्छेदाचार्यः कर्तॄन् कालावधिं पुनः।
कियन्तं कालमत्रेशः प्रवासवसतिं वसेत् ॥ ५९ ॥
मासादूर्ध्वं द्वादशाब्दादर्वाक् कालावधिः स्मृतः ।
नार्वाङ् नोर्ध्वं क्लेशवासं वासुदेवोऽनुमन्यते ॥ ६० ॥
इति पृष्टास्तु ते ब्रूयुः कालावधिमसंशयम् ।
विश्राव्य कालनियमं देवता नीयते बहिः ॥ ६१ ॥
विज्ञापयेत् ततो देवं प्रविश्य सुसमाहितः ।
कालं कर्तृभिरुद्दिष्टं ततः कुर्यादिमं विधिम् ॥ ६२ ॥
यात्राहोमादिसंयुक्तं मुहूर्ते शोभने गुरुः ।
हुत्वा वास्तोष्पतिं सद्यो देवं निष्क्रामयेद् बहिः ॥ ६३ ॥
कलशं [2]पूजयित्वाग्रे पूरितं [3]वस्त्रवेष्टितम् ।
कुम्भे तस्मिन् विधानेन योगपीठं प्रकल्पयेत् ॥ ६४ ॥
सहेमरत्नगन्धाम्भोजाम्बूनदमयाम्बु[4]जैम् ।
आवाह्य विधिना तस्मिन् देवदेवं सनातनम् ॥ ६५ ॥

१. 'नि च क्र' ग. पाठः. २. 'स्थापयि' क. ख. पाठः.
३. 'सूत्रवे' क. ग. घ. पाठः. ४. 'जै' ङ. पाठः.

पञ्चोपनिषदैर्मन्त्रैर्मन्त्रमूर्तिसमन्वितम् ।
दत्त्वार्घ्यं पूजयित्वात्र गन्धपुष्पैः प्रणम्य च ॥ ६६ ॥
वस्त्रादिवेष्टितं बिम्बं प्रयत्नात् परिकल्प्य च ।
कलशं धारयन् मूर्ध्ना निर्गच्छेद् वाग्यतो गुरुः ॥ ६७ ॥
शङ्खदुन्दुभिनिर्घोषैर्जयशब्दैश्च पुष्कलैः ।
गेहं प्रदक्षिणीकृत्य ब्रह्मघोषसमन्वितम् ॥ ६८ ॥
शनैः शनैर्व्रजेद् यत्नाद् वस्त्रालङ्कारभूषितः ।
शाकुनस्वस्तिसूक्ताभ्यामतोदेवादिना तथा ॥ ६९ ॥
अन्तर्मण्डपमानीय स्थापयेच्छयने हरिम् ।
द्वादशाक्षरमन्त्रेण न्यासं मूलेन कल्पयेत् ॥ ७० ॥
सूक्तेन च स्तुतिं कृत्वा पौरुषेण विचक्षणः ।
विष्णुसूक्तेन मूलेन द्विषट्केनाष्टकेन च ॥ ७१ ॥
नामभिः केशवाद्यैश्च दद्यात् पुष्पाणि भक्तितः ।
शालितण्डुलसम्पूर्णान् जलपूर्णांस्तथापि वा ॥ ७२ ॥
घटान् प्रागादि विन्यस्य केशवादीन् प्रपूजयेत् ।
प्रणवेनैव तान् सर्वान् देवादाहृत्य विन्यसेत् ॥ ७३ ॥
मूर्तिदेव्यो बहिः पूज्या मुद्रा दिक्पाश्च तद्बहिः ।
स्तुत्वानुज्ञाप्य तं देवं प्रथमां शान्तिमभ्यसेत् ॥ ७४ ॥
दिक्कुण्डेष्वग्निमाधाय पूर्ववन्मूर्तिधारकाः ।
आधिवासनिकान् होमानारभेरन् यथापुरम् ॥ ७५ ॥
हुत्वा देवमनुज्ञाप्य कुर्याच्छान्तिं च देशिकः ।
स्पृष्ट्वा मन्त्रैस्ततो जप्त्वा क्षालयेद् गव्यपञ्चकैः ॥ ७६ ॥

१. 'तः' ङ. पाठः.

व्यस्तैश्चैव समस्तैश्च कषायामलकाम्बुभिः ।
हेम[1]मिश्रजलैः पश्चात् स्नापयेच्छुद्धवारिभिः ॥ ७७ ॥
सूक्तैः स्तुत्वार्चयेद् देवं गन्धपुष्पादिभिः क्रमात् ।
कलशान् स्थापयेत् पश्चाद् द्वारदेशेषु सर्वतः ॥ ७८ ॥
द्रव्याणि पूजनार्थानि होमार्थानि च संभ[2]रेत् ।
तूर्यवादित्रहस्तांश्च कल्पयेत् कु[3]शलान् बहून् ॥ ७९ ॥
एतत् सर्वमुपानीय निमित्तान्युपलक्ष्य च ।
स्थानानि देवतानां च कल्पयित्वा यथाक्रमम् ॥ ८० ॥
दुःस्वप्नादिषु जातेषु प्रायश्चित्तानि कारयेत् ।
मूलेन जुहुयादाज्यं सहस्रं शतमेव वा ॥ ८१ ॥
पुण्याहजयघोषैश्च मुहूर्ते शोभने गुरुः ।
देवं प्रदक्षिणं[4] कृत्वा लब्धानुज्ञः कृताञ्जलिः ॥ ८२ ॥
सम्पूज्य विधिना देवं पुण्याहजयमङ्गलैः ।
प्रणवेन तमुत्थाप्य शाकुनेन तु देशिकः ॥ ८३ ॥
स्वस्तिसूक्तेन चानीय प्रविशेत् सप्रदक्षिणम् ।
प्रविश्य तैः समादिष्टं कालं विज्ञाप्य विष्णवे ॥ ८४ ॥
स्थापयेत् प्रतिमां तत्र मन्त्रमेतमुदीरयेत् ।
भगवन्नल्पगेहेऽस्मिन् वासः क्लेशोऽपि ते हरे ! ॥ ८५ ॥
वस्तव्यो भगवंस्तावद् यावद् गेहं समाप्यते ।
कारकस्य परामृद्धिमनुजानन् महोदयाम् ॥ ८६ ॥
भक्तानामनुकम्पार्थमिह त्वं स्थातुमर्हसि ।
इत्युक्त्वा किञ्चिदानम्य सिञ्चेत् तद्वारि मूर्धनि ॥ ८७ ॥

---

१. 'हि' क. पाठः. २. 'ह', ३. 'कलशान्' ङ. पाठः.
४. 'णीकृत्य ल' क. ख. ग. पाठः.

पञ्चोपनिषदान् मन्त्रान् ध्यात्वा सर्वेण देशिकः ।
सृष्टिन्यासं ततः कुर्यात् पौरुषं सूक्तमुच्चरेत् ॥ ८८ ॥
ततो मूर्त्यां[1] तु संयोज्य पूजयेत् कल्पवर्त्मना ।
कल्पयेत् परिवारांश्च दिशो[2]होमान् प्रकल्पयेत् ॥ ८९ ॥
दक्षिणां च ततो दद्यादन्नाद्यं चात्र का[3]रयेत् ।
यन्नोक्तं तच्च वै कुर्यात् प्रतिष्ठाविधिना सुधीः ॥ ९० ॥
निष्क्रामादिप्रवेशान्तं कर्ता स्यान्नियतो व्रती ।
जीर्णे बिम्बेऽधिवास्यैवं विष्वक्सेनात्मना स्वयम् ॥ ९१ ॥
विधिनोद्वा[4]स्य यानेन नीत्वागाधे जले क्षिपेत् ।
नवं बिम्बं तु संस्थाप्य तत्रावाह्यार्चयेत् पुनः ॥ ९२ ॥
गृहे जीर्णे द्वयो[5]र्वैवं कृत्वा शीघ्रतरं पुनः ।
नवीकृत्य यथान्यायं लेप्यार्चां गृहमेव वा ॥ ९३ ॥
संस्कृत्य सकलं कृत्वा पुरादिष्टेन वर्त्मना ।
आवाह्य पूर्ववद् विद्वान् पञ्चोपनिषदैर्हरिम् ॥ ९४ ॥
अधिवास्याग्रतश्चैवं पुनर्मूले नियोजयेत् ।
बिम्बं यदि नवं तत्राप्यर्वागावाहनात् क्रियाम् ॥ ९५ ॥
सर्वां पूर्वोक्तविधिना कृत्वास्थाप्याभिषेचयेत् ।
पूर्ववत् सकलीकृत्य पूजयेत् पुरुषोत्तमम् ॥ ९६ ॥
प्रतिष्ठाविधिना सर्वं ततः कुर्याद् विचक्षणः ।
तद्बिम्बमपि संस्कृत्य कौतुकत्वेन कल्पयेत् ॥ ९७ ॥

इति विष्णुसंहिताया[6]मेकविंशः पटलः ॥

---

१. 'दि', २. 'शो' क. ख. घ. पाठः. ३. 'कल्पयेत्' ङ. पाठः. ४. 'त्पाद्य या' क. ख. ग. ङ. पाठः ५. 'ये चैवं' क. ख. पाठः. ६. 'यां यात्रापटल एकविंशः ;' ङ. पाठः.

## अथ द्वाविंशः पटलः।

अथ वक्ष्यामि संक्षेपाद् बलिकर्म यथाक्रमम्।
त्रिसन्ध्यमुचितं नित्यमुत्सवादौ विशेषतः ॥ १ ॥
आराध्य विधिना देवं गन्धपुष्पादिभिः क्रमात्।
संस्कृतं[२] संस्कृते वह्नौ देवायान्नं निवेदयेत् ॥ २ ॥
तच्छेषेणैव कर्मार्चापीठं पात्रे प्रकल्पयेत्।
विना मन्त्रेण लोकाग्नौ बल्यर्थमपि पाचयेत् ॥ ३ ॥
स्थाल्यां तु तण्डुलाञ् शुद्धान् निरुप्तान्[३] मूलविद्यया।
प्रोक्ष्य त्रिधा परिक्षाल्य प्रज्वाल्याग्निं च तेजसा ॥ ४ ॥
पचेद् व्यजनवातेन हविर्न स्कन्द्यते यथा।
अभिघार्यावतार्याथ विन्यसेत् पात्रघट्टितम्[४] ॥ ५ ॥
पात्रेऽन्यस्मिन्नुपस्तीर्य क्षिप्तं प्रत्यभिघार्य च।
साज्यं निवेदयेद् भागं देवायान्यं च होमयेत् ॥ ६ ॥
गोमयेनोपलिप्यैशे पात्रं दर्भेषु सादयेत्।
हैमं वा राजतं ताम्रं रत्निमात्रं तु मण्डलम् ॥ ७ ॥
अष्टाक्षरेण सम्प्रोक्ष्य सम्यक् प्रोत्तानितं जलैः।
अभिघार्य हविश्शेषं हृदा तस्मिन् विनिक्षिपेत् ॥ ८ ॥
पीठं प्रकल्पयेत् तेन कर्मार्चा यत्र नेष्यते।
अन्यदा मसृणीकृत्य दध्याज्यक्लेदितं शुभम् ॥ ९ ॥
शिवकं कारयेत् तेन चतुरङ्गुलविस्तरम्।
द्वादशाष्टाङ्गुलोत्सेधं षडङ्गुलमथापि वा ॥ १० ॥
विन्यस्य काञ्चनं मूर्ध्नि शक्तिमावाह्य पूजयेत्।
परमेष्ठ्यात्मिकां मध्ये पुरुषादिसमावृताम् ॥ ११ ॥

---

१. 'वेषु ।वे', २. 'स्य' क. ख. पाठः. ३. 'द्धा', ४. 'घटि' ङ. पाठः.

तस्मिन् संस्थापयदर्चां सर्वेणावाह्य पञ्चभिः ।
मूलेनावाह्य वा हेम्नि वर्णमूर्तिवृतं हरिम् ॥ १२ ॥
गन्धपुष्पैस्तमभ्यर्च्य[1] ध्यात्वा सवनभेदितम्[2] ।
तत्पात्रं स्थापयेन्मूर्ध्नि दीक्षितस्य द्विजन्मनः ॥ १३ ॥
उष्णीषादियुतो मौनी गृहीत्वा व्याहृतिं जपेत् ।
देवस्य पुरतः स्थित्वा प्रणम्य तु बहिर्[3]व्रजेत् ॥ १४ ॥
शङ्खदुन्दुभिनिर्घोषैर्जयशब्दैश्च पुष्कलैः ।
अष्टमङ्गलसंयुक्तं वितानाद्युपशोभितम् ॥ १५ ॥
देवनागाप्सरोयक्षमुनिगन्धर्वकिन्नराः ।
सर्वे चानुगमिष्यन्तो ध्येयाः स्वगुणसंवृताः[4] ॥ १६ ॥
गन्धं पुष्पं जलं धूपं दीपं छत्रं च चामरम् ।
मङ्गलानि हविर्घण्टां गृह्णीयुस्तत्र दीक्षिताः ॥ १७ ॥
निर्गम्य[5] शमितैर्घोषैर्ब्राह्मणानामनुज्ञया ।
मङ्गलानि गुरुर्ब्रूयाद् द्विजाश्चान्ये तथास्त्विति ॥ १८ ॥
जगन्निर्माणसंहारस्थित्यनुग्रहहेतवः ।
देवानामीश्वरा देवा मङ्गलं प्रदिशन्तु नः ॥ १९ ॥
विष्णुर्ब्रह्मा च रुद्रश्च प्रचण्डश्चण्ड एव च ।
गरुत्मान् ऋषभश्चैते मङ्गलं प्रदिशन्तु नः ॥ २० ॥
इन्द्रश्चाग्निर्यमश्चैव निर्ऋतिर्वरुणस्तथा ।
वायुर्वै[6]श्रवणेशानौ[7] मङ्गलं प्रदिशन्तु नः ॥ २१ ॥

१. 'स्तमाराध्य ध्या' ख. ग. पाठः. २. 'तः' ङ. पाठः. ३. 'पुनर्व्र' ख. ग. पाठः. ४. 'युताः' क. ख. ग. पाठः. ५. 'त्य'. ६. 'वै', ७. 'ना' ख. ग. पाठः.

वराहनरसिंहौ च रामश्रीधरवामनाः ।
हयास्यवासुदेवौ च मङ्गलं प्रदिशन्तु नः ॥ २२ ॥
पूरुश्च निर्ऋतिश्चैव सिंहो नारायणाच्युतौ ।
अनिरुद्धो हरिः कृष्णो मङ्गलं प्रदिशन्तु नः ॥ २३ ॥
कुमुदः कुमुदाक्षश्च पुण्डरीकोऽथ वामनः ।
शङ्कुकर्णः सर्वनेत्रः सुमुखः सुप्रतिष्ठितः ॥ २४ ॥
देवदौवारिकाश्चैते मङ्गलं प्रदिशन्तु नः ।
अष्टोत्तरसहस्रं तु विष्णुपारिषदाश्च ये ॥ २५ ॥
अनुपारिषदाश्चान्ये मङ्गलं प्रदिशन्तु नः ।
भूर्लोक[1]भुवर्लो[2]काद्याः सप्त लोकाः प्रकीर्तिताः ॥ २६ ॥
सागराश्च तथा सर्वे मङ्गलं प्रदिशन्तु नः ।
तथा पातालालोकाश्च रुद्रलोकाः सुखोषिताः ॥ २७ ॥
दिक्षु सर्वासु तिष्ठन्तो मङ्गलं प्रदिशन्तु नः ।
वेदाश्चाप्युपवेदाश्च सेतिहासाः कथा अपि ॥ २८ ॥
षडङ्गानि च शास्त्राणि मङ्गलं प्रदिशन्तु नः ।
गङ्गा च यमुना चैव तथा गोदा सरस्वती ॥ २९ ॥
नर्मदा चैव कावेरी मङ्गलं प्रदिशन्तु नः ।
सूर्यादयो ग्रहाश्चाथ मेषाद्या राशयस्तथा ॥ ३० ॥
मासाश्चापि सविष्ण्वाद्या मङ्गलं प्रदिशन्तु नः ।
सर्वे विद्ये[3]श्वराश्चापि ये दिव्या ये च मानवाः ॥ ३१ ॥
दिव्यन्तरिक्षभूमिस्था मङ्गलं प्रदिशन्तु नः ।
[4]धरा ध्रुवश्च सोमश्च आपश्चैवानलोऽनिलः ॥ ३२ ॥

---

१., २. 'लो' ङ पाठः. ३. 'द्याधराश्चैव' ख. ग., 'श्चेश्वरा' ङ. पाठः.
४. 'धारो' क. ख. ग. घ. पाठः.

प्रत्यूषश्च प्रभातश्च मङ्गलं प्रदिशन्तु नः ।
यज्ञाश्च पञ्चयज्ञाश्च पाकयज्ञास्तथैव च ॥ ३३ ॥
सर्वयज्ञमहायज्ञा मङ्गलं प्रदिशन्तु नः ।
कुमार्यश्च कुमाराश्च गणेशाश्च विनायकाः ॥ ३४ ॥
सर्पाश्च किन्नराश्चापि मङ्गलं प्रदिशन्तु नः ।
मृगव्याधश्च शर्वश्च निर्ऋतिश्चाज एकपात् ॥ ३५ ॥
अहिर्बुध्निः पिनाकी च भवनोऽथेश्वरस्तथा ।
स्थाणुर्भवश्च पापारिर्मङ्गलं प्रदिशन्तु नः ॥ ३६ ॥
धातार्यमा च मित्रश्च वरुणोंऽशो भगस्तथा ।
इन्द्रो विवस्वान् पूषा च पर्जन्यत्वष्टृविष्णवः ॥ ३७ ॥
एते वै द्वादशादित्या मङ्गलं प्रदिशन्तु नः ।
यवक्रीतश्च क्रीतश्च अर्वा वसुविभावसू ॥ ३८ ॥
कक्षीवान् नारदः कण्वो मङ्गलं प्रदिशन्तु नः ।
उन्मुचिः प्रमुचिश्चैव आत्रेयोऽगस्त्य एव च ॥ ३९ ॥
दृढायुश्चेध्मवाहश्च मङ्गलं प्रदिशन्तु नः ।
दृषद्गुह्यमहद्गुह्यपरिव्राजास्तथैव च ॥ ४० ॥
एकद्वित्रिसमाख्याता मङ्गलं प्रदिशन्तु नः ।
कश्यपोऽत्रिर्वसिष्ठश्च भारद्वाजोऽङ्गिरास्तथा ॥ ४१ ॥
कौशिको भगवांश्चैते मङ्गलं प्रदिशन्तु नः ।
आवहो विवहश्चैव उद्वहः सुवहस्तथा ॥ ४२ ॥
परीवहो विवहश्चैते मङ्गलं प्रदिशन्तु नः ।
श्वेतकेतुश्च व्यासश्च वाल्मीकिः सुयशास्तथा ॥ ४३ ॥

१. 'स' क. ख. पाठः. २. 'एते' क. ख. ग. घ. पाठः. ३. 'श्चैव म' ख. ग. पाठः. ४. 'चा' ङ. पाठः.

और्वशेयश्च शक्तिश्च तथा चैव पराशरः ।
सप्तैते दिव्यमुनयो मङ्गलं प्रदिशन्तु नः ॥ ४४ ॥

एवं मङ्गलवादात् ताः सिद्धिं यच्छन्ति देवताः ।
सर्वकर्म समारम्भे कर्तव्यं च [1]समङ्गलम् ॥ ४५ ॥

मण्डपद्वारमासाद्य शङ्खतूर्यादिनिस्वनैः ।
द्वाःस्थादिभ्यो बलिं दद्याद् गन्धपुष्पादिसंयुतम् ॥ ४६ ॥

एभिर्मन्त्रैरुपस्थाय स्वमन्त्रैरभिपूज्य तान् ।
तत्र तत्र बलिं दद्याद् देवदृष्ट्यावलोकितम् ॥ ४७ ॥

नमस्ते द्वारपालाय चण्डायामिततेजसे ।
नरसिंहतनूजाय चक्रेणाङ्कितमौलये ॥ ४८ ॥

नमस्ते द्वारपालाय प्रचण्डायामितौजसे ।
नरसिंहतनूजाय शङ्खेनाङ्कितमौलये ॥ ४९ ॥

वाहनाय महाविष्णोस्ताक्ष्यायामिततेजसे ।
गरुडाय नमस्तेऽस्तु सर्वसर्पेन्द्रमृत्यवे ॥ ५० ॥

दैत्यदर्पविनाशाय सहस्राक्षाय धीमते ।
कुलिशव्यग्रहस्ताय नमस्तेऽस्तु शतक्रतो! ॥ ५१ ॥

मुखं यः सर्वदेवानां येन हव्यं च नीयते ।
येन प्रवर्तते सर्वं नमस्तस्मै हविर्भुजे ॥ ५२ ॥

येन संह्रियते सर्वं येन धर्मश्च रक्ष्यते ।
यस्माद् बिभेति लोकोऽयं प्रेतनाथ! नमोऽस्तु ते ॥ ५३ ॥

राक्षसा यातुधानाश्च पिशाचाश्चाश्रयन्ति यम् ।
तस्मै निर्ऋतिरूपाय रक्षसां पतये नमः ॥ ५४ ॥

---

१. 'सु' क. पाठः.

येन संरक्ष्यते सर्वं यस्मिन् सर्वं प्रतिष्ठितम् ।
अमोघपाशहस्ताय तस्मैपांपतये नमः ॥ ५५ ॥
पूर्यन्ते च ह्रियन्ते च येन प्राणादयः क्रमात् ।
भूतानां पतये नित्यं नमस्तस्मै मरुत्पते ! ॥ ५६ ॥
यत्प्रसादाज्जगत् कृत्स्नं धनेन परिपूर्यते ।
यक्षगुह्यकनाथाय धननाथ ! नमोऽस्तु ते ॥ ५७ ॥
येन कालाग्निना लोको युगान्तेष्ववगृह्यते ।
तस्मै ते ब्रह्मणः पुत्र ! विरूपाक्ष ! नमोऽस्तु ते ॥ ५८ ॥
वीरभद्र ! नमस्तेऽस्तु नमो विघ्नेश्वराय च ।
ब्राह्म्यादिभ्यश्च सप्तभ्यो मातृभ्यो वै नमो नमः ॥ ५९ ॥
श्रीधराय नमस्तेऽस्तु नमस्तेऽश्वमुखाय च ।
वागीश्वर्यादिमातृभ्यः सर्वाभ्यो वै नमो नमः ॥ ६० ॥
विष्वक्सेन ! नमस्तेऽस्तु देवनिर्माल्यधारिणे ।
शङ्खचक्रगदापाणे ! महापारिषदेश्वर ! ॥ ६१ ॥
ये समस्तं जगद् व्याप्य तिष्ठन्ति बलिकाङ्क्षिणः ।
विष्णुपारिषदाः सर्वे गृह्णन्तु बलिमुत्तमम् ॥ ६२ ॥
इत्याघोष्य बहिर्दिक्षु गणैरष्टविधैः सह ।
कुमुदादिबलिं[1] दत्त्वा बलिपीठे बलिं हरेत् ॥ ६३ ॥
ये भूता इति दिक्षूर्ध्वं भूतनाथाय मध्यतः ।
मुष्टिना मुष्टिना सर्वान् प्रीणयेद् विष्णुपार्षदान् ॥ ६४ ॥
गृह्णन्तु बलिमेतं तु बाह्यस्था विहगाननाः ।
ये क्रूरा येऽल्पसत्त्वाश्च भूतप्रेतनिशाचराः ॥ ६५ ॥

१. 'सर्वं ध्' ख. ग. ङ. पाठः.

वेतालाश्चैव मातङ्गा हीनाहीनाश्च[1] ये गणाः ।
सर्वेषामेव तेषां च हरामि बलिमुत्तमम् ॥ ६६ ॥
सर्वेभ्यश्चैव भूतेभ्यः सगणेभ्यो नमो नमः ।
त्रिः प्रदक्षिणमावृत्य बलिना तोषयेद् गणान् ॥ ६७ ॥
सवने सवने चैव नृत्तगीतादिसंयुतम् ।
गन्धपुष्पादि दत्त्वान्ते बलिशेषं जलाप्लुतम् ॥ ६८ ॥
निर्हरेदों नमो विष्णुपार्षदेभ्य इति ब्रुवन् ।
आचम्य प्रयतो विष्णुं स्मरन्नेत्य समाहितः ॥ ६९ ॥
सर्वेणारोप्य तामर्चां पुनर्मूले नियोजयेत् ।
विष्वक्सेनाय तत् सर्वं समाल्यं[2] दापयेद्धविः ॥ ७० ॥
पिण्डे[3] तु बलिपात्रे वा पतिते दूषितेऽपि[4] वा ।
तत्र[5] प्रक्षाल्य तत् स्नात्वा कृत्वा न्यासं यथाक्रमम् ॥
परिश्रित्याशु तां भूमिं गोमयेनोपलेपयेत्[6] ।
पायसं श्रपयित्वात्र घृतमिश्रं सुशोभनम् ॥ ७२ ॥
लिखित्वा स्वस्तिकं तत्र चूर्णैः शालिनिशामयैः ।
व्रीहिभिः स्थण्डिलं कृत्वा तस्मिन्नास्तीर्य चाम्बरम् ॥
तण्डुलैश्च कुशैः पुष्पैः प्रोक्ष्यास्त्रेण समाहितः ।
मूलेन विन्यसेत् पात्रं प्रणवेन स्पृशेत् ततः ॥ ७४ ॥
पुनश्चास्त्रेण सम्प्रोक्ष्य दक्षिणे शान्तिमर्चयेत् ।
उल्लेखनादिकं कृत्वा संस्कृत्याग्निं यथाविधि ॥ ७५ ॥

---

१. 'नागाश्च' च. पाठः. २. 'निर्माल्यं' ख. पाठः. ३. 'बिम्बे वा ब' क. ख. ग. पाठः. ४. 'तु' ख. ग. पाठः ५. 'तः' च. पाठः. ६. 'नानुले' क. पाठः.

हुत्वान्नं मूलमन्त्रेण प्रणवेनाज्यमेव च ।
अष्टोत्तरशतं वापि सहस्रं वा यथाक्रमम् ॥ ७६ ॥
हविश्शेषं ततः पश्चाद् बलिपात्रे तु निक्षिपेत् ।
तत् कृत्वा पूर्ववत् प्रोक्ष्य मूलेनावाहनं भवेत् ॥ ७७ ॥
पाद्यमर्घ्यं ततो दत्त्वा गन्धपुष्पैरथार्चयेत् ।
नमस्कृत्य ततः स्तुत्वा स्तोत्रैरेवं निवेदयेत् ॥ ७८ ॥
भगवन्! बलिपातस्य प्रायश्चित्तविधिर्मया ।
कृतोऽयं त्वत्प्रसादेन सम्पूर्णः शान्तिदोऽस्तु नः ॥ ७९ ॥
पुण्याहं वाचयित्वा च ब्राह्मणैः स्वस्ति वाचयेत् ।
नमस्कृत्य ततः स्तुत्वा सोत्तरीयः समाहितः ॥ ८० ॥
उद्धृत्य व्याहृतीर्जप्त्वा मूर्ध्नि तारेण विन्यसेत् ।
शङ्खतूर्यादिसंयुक्तं शनैर्गत्वा प्रदक्षिणम् ॥ ८१ ॥
अन्तः प्रवेशयेत् पश्चादैशान्यां स्थापयेद् बुधः ।
उद्वास्यान्नं बहिस्त्यक्त्वा विष्वक्सेनाय कल्पयेत् ॥ ८२ ॥
पात्रं प्रक्षाल्य तोयेन विधिनाचम्य च स्वयम् ।
प्रासादे विन्यसेत् पात्रं ततः कुर्याच्च शान्तिकम् ॥ ८३ ॥
राशिचक्रविधानेन केशवादीन् यथाक्रमम् ।
चक्राब्जे पूजयेद् विद्वानग्निकार्यसमन्वितम् ॥ ८४ ॥
बलिपातदिगीशं च तन्मासाधिपमेव च ।
तिथ्यृक्षवारराशीनां देवतांश्चापि तर्पयेत् ॥ ८५ ॥

इति विष्णुसंहितायां बलिदानविधिर्नाम द्वाविंशः पटलः ॥

---

१. 'याग् ग' ख. ग. पाठः

## अथ त्रयोविंशः पटलः ।

अथ वक्ष्यामि संक्षेपाद् विश्वार्चां सर्वभूतिदाम्[1] ।
दिग्विभागसमायुक्तां सर्वलोकहिताय वै ॥ १ ॥
विधिवत् स्थापिते देवे यथान्यायं प्रपूजयेत् ।
कर्तव्या विश्वदेवार्चा वृद्ध्यर्थं सर्वदा[2]ऽपि वा ॥ २ ॥
मध्ये साङ्गं यजेद् विष्णुं दिग्विदिक्षु ततः सुरान् ।
पूर्वादौ पुरुषं सत्यमच्युतं चानिरुद्धकम् ॥ ३ ॥
विश्वरूपं च वैकुण्ठं सर्वं भावनमेव च ।
विद्याधिपतयश्चैते शङ्खचक्रगदाधराः ॥ ४ ॥
विष्णुरूपाः सदा पूज्याः सगणास्तु पृथक् पृथक् ।
शक्तयोऽष्टौ भृशादिस्थाः सुरूपाः सर्वकामदाः ॥ ५ ॥
प्रज्ञा बुद्धिः स्मृतिः कीर्त्तिः श्रुतिर्मेधा धृ[3]तिः क्षमा ।
शङ्खः सुदर्शनहलौ गदामुसलखड्गकाः ॥ ६ ॥
धनुः स्रगुत्तमा चाष्टौ दिग्विदिक्षु च तद्बहिः ।
वज्रदण्डत्रिशूलानि पाशोऽस्त्राणि तथैव च ॥ ७ ॥
ततः शक्तिश्च शस्त्राणि वैष्णवास्त्रं भृशादिषु ।
अस्त्रावरणमेवं तु शूलं सपरशुं यजेत् ॥ ८ ॥
इन्द्रो यमश्च वरुणः सोमोऽग्निर्निर्ऋतिस्तथा ।
वायुरीशान इत्यष्टौ लोकपालास्तु[4] तद्बहिः ॥ ९ ॥
आदित्या विश्वदेवाश्च मरुतो विघ्ननायकाः ।
स्कन्दो रुद्राश्च वसवश्चाश्विनौ च भृशादिषु ॥ १० ॥

---

१. 'सिद्धिदाम्', २. 'था', ३. 'द्यु', ४. 'श्च' ख. ग. पाठः.

बहिर्ग्रहगणाः पूज्याः पितृयक्षगणास्तथा ।
गन्धर्वाः सर्वभूतानि चाम्बिका राक्षसास्तथा ॥ ११ ॥
विद्याधराश्च सिद्धाश्च पूज्याः सर्वे स्वनामभिः ।
ततोऽप्सरोलोकमातृकूष्माण्डाश्च पिशाचकाः ॥ १२ ॥
नागाश्च किन्नराः सर्पा व्याधयश्च भृशादिषु ।
नन्दनः कुमुदश्चाथ द्वाःस्थौ दक्षिणवामयोः ॥ १३ ॥
गृहगोपुरमध्येऽर्च्यो ध्वजोऽश्वस्तद्भृशान्तरे ।
रथो गृहेन्द्रमध्ये स्यात् पर्जन्येन्द्रे खगेश्वरः ॥ १४ ॥
पुंशङ्खमध्यगः पूज्यः सुवर्चाः कलशाधिपः ।
पुरप्रासादमध्येऽर्च्यो बलाख्यो मण्डपाधिपः ॥ १५ ॥
भाण्डागारेऽक्षयः पूज्यो जलस्थाने तथा नरः ।
सभास्थानेऽद्भुतो वृद्धिकरश्चाथ महानसे ॥ १६ ॥
उन्मादः पचनागारे तर्पणो भोजनालये ।
कुन्दरः कुसुमागारे निर्गमे विक्षरस्तथा ॥ १७ ॥
बलश्चातिबलश्चोभौ पीठेऽर्च्यौ बलिरक्षकौ ।
विकटश्च विरूपाक्षः पूर्वगोपुरपालकौ ॥ १८ ॥
द्वाःस्थौ दक्षिणवामस्थौ भीमरूपौ गदाधरौ ।
सनातनश्च सनको दक्षिणद्वारपालकौ ॥ १९ ॥
पूजनीयौ प्रयत्नेन खड्गमुद्गरधारिणौ ।
दण्डपाशधरौ शान्तप्रमोदौ चैव पश्चिमे ॥ २० ॥
उत्तरे सर्वदः सर्वदमनश्चापतूणिनौ ।
चरको बहिरीशाने विदारोऽग्नौ तु पूतनः ॥ २१ ॥

नैर्ऋते वायुबाह्ये तु राक्षसः पापचारकः ।
बलिपीठाधिपः प्राच्यां देवो नन्दिकरो यमे ॥ २२ ॥
पश्चाद् विभीषणः सौम्ये सुलभस्थानपालकाः ।
येऽनुक्ता मातरोऽनन्तो विष्वक्सेनो ध्वजाधिपाः ॥ २३ ॥
रेवन्तः क्षेत्रपालाश्च ते पूज्यास्तत्र तत्र वै[2] ।
स्थितासीने चतुष्षष्टिः सुप्ते तेऽशीतिरेकिनी ॥ २४ ॥
सामान्यं तु शतं त्रेधा प्राकारान्तर्विभाजनम् ।
अन्तश्चतुष्कं प्रासादं द्विगुणं च प्रकल्पयेत् ॥ २५ ॥
दक्षिणे नन्दनं द्वाःस्थं चतुर्बाहुं गदाधरम् ।
तथैव कुमुदं कुर्याद् वामे पट्टसपाशिनम् ॥ २६ ॥
अङ्गुल्यर्धार्धयुग् वामे कुर्यादालयमासने ।
शते पादप्रविष्टाः स्युः परिवारालयाः पृथक् ॥ २७ ॥
यथैव तु[3] चतुष्षष्टौ संगमस्थाः सुराः पृथक् ।
तथा शतपदे प्रोक्ता गर्भादिपरिकल्पना ॥ २८ ॥
चतुर्थे सङ्गमेऽर्यम्णो विवस्वन्मित्रभूभृताम् ।
पुरुषाद्यालयं कुर्यात् सावित्राद्याद्यसङ्गमे ॥ २९ ॥
विश्वादीनां क्रमादेवं[4] स्थानानि परिकल्पयेत् ।
तृतीये सङ्गमेऽर्यम्णः पञ्चमे तु विवस्वतः ॥ ३० ॥
तृतीये तस्य मित्रस्य पञ्चमेऽस्य तृतीयके ।
भूभृतः पञ्चमे तस्य तृतीयेऽर्यमपञ्चमे ॥ ३१ ॥

---

१. 'म' च. पाठः. २. 'तु' ख. घ. पाठः. ३. 'च' क. पाठः.
४. 'पदानि स्युस्तद्वत् सङ्गेन्द्ररुद्रयोः । विभावनालयं चात्र कुर्याद् वत्साद्यसङ्गमे' ॥ क. ख. ग. ङ. च. पाठः.

प्रज्ञादीनां क्रमादेवमालयाः परिकीर्तिताः ।
शङ्खादयोऽर्यमादीनां चतुर्णामाद्यसङ्क्रमे ॥ ३२ ॥
मुसलाद्यालयाश्चैवं सावित्राद्याद्यसङ्क्रमे ।
सङ्गेऽर्यमसवित्रादिद्वादशानां द्वयोर्द्वयोः ॥ ३३ ॥
किञ्चित्सूत्रं विमुच्याथ वज्राद्यस्त्राणि कल्पयेत् ।
वज्रदण्डादयोऽस्त्रैः स्वैः स्थाप्या भूतगणैः सह ॥ ३४ ॥
भान्विन्द्रसङ्गमाद्यष्टस्थानेष्विन्द्रादिलोकपाः ।
सेङ्गे[२] भृशखयोर्गेहक्षतवैतथयोस्तथा ॥ ३५ ॥
गन्धर्वभृङ्गयोश्चैव द्वाःस्थसुग्रीवयोस्तथा ।
श्वासशोषणयोर्नागमुख्ययोर्दित्यकाख्ययोः ॥ ३६ ॥
जयं[३]पर्जन्ययोश्चान्ये सम्पूज्या देवतागणाः ।
बाह्येऽर्कयमवारीशसोमानां तु ग्रहादयः ॥ ३७ ॥
अग्नेः पितॄणां रोगेशोर्बहिः स्युश्चण्डिकादयः ।
खबाह्येऽप्सरसः पूष्णि पितृभद्रविनायकाः ॥ ३८ ॥
कूष्माण्डास्तु मृगे द्वार्स्थे पिशाचाः शोषणेऽहयः ।
मुख्ये तु[४] किन्नराः सर्पा व्याधयस्त्वर्गळे शिवे ॥ ३९ ॥
सत्ये रङ्गं जलस्थानं पर्जन्ये कारयेद् बुधः ।
चरकस्य विदारस्य पूतनस्य च रक्षसः ॥ ४० ॥
ईशाग्निपितृरोगाणां बाह्ये कोणे स्मृता गृहाः ।
तद्बाह्यतस्तु मर्यादाभित्तिरुच्छ्रितगोपुरा ॥ ४१ ॥
बलिपीठं तु कर्तव्यं शास्त्रतो गोपुराद् बहिः ।
शक्रगोपुरमध्ये तु ध्वजस्थाने विधीयते ॥ ४२ ॥

१. 'मन्त्य स' क. पाठः. २. 'स्थाने च सत्यभृशयोः पूषावितथयोस्तथा' क. ख. पाठः. ३. 'यत्तप' ख. पाठः. ४. 'स' ख. ग. घ. पाठः.

तत्राश्वरथताक्ष्यीणामालयाः परितः[1] क्रमात्।
शङ्ख[2]गोपुर[3]मध्यस्थः कर्तव्यः कलशाधिपः ॥ ४३ ॥
तथा पुरुप्रासादान्तः स्थितः स्यान्मण्डपाधिपः।
भल्लाटसङ्गमे चैव भाण्डागारं प्रकल्पयेत् ॥ ४४ ॥
माहेन्द्रे तु सभास्थानं सत्ये स्याद् भोजनालयः।
पूष्णि पाको मृगे पुष्पं पुष्पदन्तेऽम्बुनिर्गमः ॥ ४५ ॥
सत्ये वा स भवेत् कूपः कर्तव्योऽदितिगोचरे।
असुरे तु बलिस्थानं गन्धो रोगे प्रकीर्तितः ॥ ४६ ॥
ईशोऽग्निः पितरो रोग इति देवास्तु कोणगाः।
अर्गले क्षेत्रपालस्य भृङ्गे वै शास्तुरालयः ॥ ४७ ॥
एष पूर्वमुखस्योक्तो विधिर्विश्वार्चने हरेः।
ध्वजादि विपरीतं स्यात् पश्चिमाभिमुखस्य तु ॥ ४८ ॥
असुरे स्यात् तदा रङ्गं सत्ये च बलिमण्डपः।
महेन्द्रे जलमार्गः स्यादयं शतपदे विधिः ॥ ४९ ॥
सङ्गमस्थास्तु चत्वार इतरे सङ्गमेश्वराः।
एतावांस्तु चतुष्षष्टौ विशेषोऽत्र प्रकीर्तितः ॥ ५० ॥
कुमुदः करवीरश्च द्वारपालौ चतुर्भुजौ।
पुरतः सङ्गमेऽर्यम्णश्चतुर्थे गरुडालयः ॥ ५१ ॥
सुभद्रस्य सुबाहोश्च विजयस्य बलस्य च।
कुमुदस्य मुनेश्चैव विष्वक्सेनस्य चालयाः ॥ ५२ ॥
आग्नेयादिषु कर्तव्या गणेशानां प्रकीर्तिताः।
सर्वे चतुर्भुजाः कार्या गदाचक्रासिधारिणः ॥ ५३ ॥

---

१. 'कीर्तिताः।' क. ख. पाठः. २. 'क्रमात् पुंशङ्कम' ख. ग. पाठः. ३. 'पूरुषम' क. पाठः.

सुवर्णशङ्खनीलाभ्रकृष्णपिञ्जरगौरकाः ।
श्यामश्च तेऽर्यमादिस्था लोकपालाश्च कीर्तिताः ॥ ५४ ॥
प्राकारस्थास्तु कर्तव्याः क्षेत्रपर्यन्तदेवताः ।
भानोस्तु पुरतश्चक्रं ततो गोपुरपीठके ॥ ५५ ॥
ततश्चतुर्षु कोणेषु रक्षसां स्थानमुच्यते ।
एकाशीतौ च परितः पदं त्रि[1]त्रिकसंख्यया ॥ ५६ ॥
गणेश्वरा दिगीशाश्च कर्तव्याः स्वपदस्थिताः ।
शेषं कुर्याद् यथो[2]द्दिष्टं विष्णोरावरणक्रमम् ॥ ५७ ॥
बहिः प्राकारकोणस्थाः कर्तव्या रक्षसां गृहाः ।
गोपुरादि च कर्तव्यं बलिपीठान्वितं तथा[3] ॥ ५८ ॥
एवमेव विधानेन कृत्वा विष्णोरिहालयम् ।
सर्वकामानवाप्नोति गच्छेद् विष्णुपदं पुनः ॥ ५९ ॥
शङ्खचक्रगदाखड्गमुसलं हलमेव च ।
चापोऽङ्कुशं स्रगेतेषामालयाश्चात्र कीर्तिताः ॥ ६० ॥
पयोहेमखनीलासृक्पद्माभ्राभितडित्प्रभाः ।
मूर्ध्नि स्वाङ्कसमायुक्ताः कर्तव्या हरिहेतयः ॥ ६१ ॥
पूर्वास्त्वप्रतिचाल्याः स्युरितराश्चास्थिराः शुभाः ।
अन्योन्याभिमुखाः कार्यास्तथान्ये दक्षिणोत्तराः ॥ ६२ ॥
स्थानेश्वरस्य देवस्य यत् पूर्वकृतमास्पदम् ।
तस्य प्रतिमुखे कार्यं नान्यास्पदमशत्रुभिः ॥ ६३ ॥
अज्ञानादिह यः कुर्यान्नश्येत् स्थानं श्रिया सह ।
अन्योन्याभिमुखे चोभे न कार्ये देवतागृहे ॥ ६४ ॥

---

१. 'तत्रि', २. 'थेष्टं हिवि' क. पाठः. ३. 'तः' ख. पाठः.

अन्योन्यपृष्ठसंस्थे च राजराष्ट्रादिनाशने ।
नानुपृष्ठं तथा कुर्यात् कृते चान्यो निषिच्यते ॥ ६५ ॥
व्यत्यस्तमेकसूत्रस्थं न कुर्यादेव सर्वथा ।
यतोमुखः प्रधानः स्याद् देवाश्चान्ये ततोमुखाः ॥ ६६ ॥
कर्तव्याः परिवारास्तु प्रधानाभिमुखाः सदा ।
एकसूत्रं तथाक्रम्य विपरीतं न कारयेत् ॥ ६७ ॥
अन्योन्यं दक्षिणाक्षिभ्यां प्रशस्तं दर्शनं द्वयोः ।
अप्रशस्तं च विज्ञेयं तथा वामाक्षिदर्शनम् ॥ ६८ ॥
परिवारविधौ चापि सूत्रमाक्रम्य नाचरेत् ।
अङ्गुलं गोलकं वापि परिहृत्यैव कारयेत् ॥ ६९ ॥
आसनं ग्राममध्ये तु पूर्वतोमुखमिष्यते ।
ग्रामस्याभिमुखं त्वेवं स्थानं पूर्वे च पश्चिमे ॥ ७० ॥
शयनं दक्षिणस्यां तु कर्तव्यं पश्चिमामुखम् ।
उत्तरस्यां तु शयनं पूर्वतोमुखमेव च ॥ ७१ ॥
क्षेत्रभागवशादेव कर्तव्यं त्वन्यथामुखम् ।
देवाग्रे दक्षिणेनाथ सर्वतो वा जलाशयाः ॥ ७२ ॥
न रुद्राभिमुखं कुर्याद् ग्रामं नगरमेव वा ।
नोच्चस्थानगतं चैव दुर्गादिस्थानमिष्यते ॥ ७३ ॥
यत्र नीचे स्थितो विष्णुरुच्चैरन्याश्च देवताः ।
विनश्येदचिरादेव तत् स्थानं राष्ट्रमेव वा ॥ ७४ ॥
अरण्ये पर्वते तीर्थे नदीतीरे च सङ्गमे ।
क्षेत्रे च श्रद्धया कुर्याद् युक्त्या भस्यादिसङ्ग्रहम् ॥ ७५ ॥

देवभागस्थितं देवं स्वयं तद्भागसंस्थितः।
अर्चयीत प्रयत्नेन पैशाचासुरवर्जितम् ॥ ७६ ॥
ब्रह्मस्थानगतं वापि देवदेवं समर्चयेत् ।
देवभागस्थितस्त्वेव द्रव्यैस्तद्भागसंस्थितैः ॥ ७७ ॥
विदिक्सूत्रं परित्यज्य दक्षिणं पार्श्वमाश्रितः।
अर्चयेत् तं प्रयत्नेन यस्तु सिद्धिमभीप्सति ॥ ७८ ॥
जपं सम्पुटविन्यस्तं देवपार्श्वे निधापयेत् ।
अथवा जप्तमात्रं तु दद्याद् भगवते सदा ॥ ७९ ॥
ब्रह्मसूत्रं परिहरेत् पूजनाजपकालयोः।
अविघ्नो भवति ह्येष जपार्चनविधिः सदा ॥ ८० ॥
एवं क्रमेण यो विष्णुमर्चयेद् भक्तिसंयुतः ।
स भोगानीप्सितान् भुक्त्वा विष्णोर्याति सलोकताम् ॥
एवमिष्ट्वा यथान्यायं सर्वदेवगणान्वितम् ।
ततः स्वशक्तियोगेन विष्णोः स्नानं समाचरेत् ॥ ८२ ॥
सर्वदेवार्चना होमः कर्तव्यश्च स्वनामभिः ।
सर्वेषां समिदाज्यान्नैर्हविषाज्येन वा पृथक् ॥ ८३ ॥
भूतेभ्यश्च बलिं दद्याच्छक्त्या विप्रांश्च भोजयेत् ॥ ८३½ ॥

इति विष्णुसंहितायां विश्वार्चनं नाम त्रयोविंशः पटलः ॥

### अथ चतुर्विंशः पटलः ।

अथ वक्ष्यामि संक्षेपाज्जीर्णोद्धारविधिं परम् ।
स्थापनात् सर्वथा कार्यो यस्मिन् दशगुणो विधिः ॥ १ ॥

सर्वात्मनो हरेर्बिम्बे भग्ने जीर्णे चले स्थिते ।
ग्रामराष्ट्रादिनाशः स्यात् तस्मात् कार्या तदुद्धृतिः ॥ २ ॥
देहं देही यथा जीर्णं त्यक्त्वा देहान्तरं व्रजेत् ।
त्यक्त्वा जीर्णं तथा बिम्बं देवोऽपि भजते नवम् ॥ ३ ॥
अर्चां त्यजति देवेशो जीर्णां जीर्णामिव स्रजम् ।
मा विक्षन् यातुधाना इत्युद्धरेदविलम्बितम् ॥ ४ ॥
विप्रान् सद्यः समाहूय तन्त्रज्ञान् वेदपारगान् ।
शतं सहस्रमयुतमधिकं वा यथाबलम् ॥ ५ ॥
तानर्चितान् यथाशक्ति भक्त्या कृत्वा प्रदक्षिणम् ।
नमोब्रह्मण्यमन्त्रेण प्रणिपत्य समाहितः ॥ ६ ॥
आशिषो वाचयेद् बह्वीराचार्यस्तु समूर्तिपः ।
जितं त इति नत्वा तान् पुनरुत्थाय वाग्यतः ॥ ७ ॥
देवं च मनसा ध्यात्वा[2] बद्धाञ्जलिरिदं वदेत् ।
पूजाबिम्बमिदं विष्णोः स्थापितं पूर्वसूरिभिः ॥ ८ ॥
अनेन दूषणेनाद्य दूषितं चेह वर्तते ।
दुष्टबिम्बस्य चोद्धारः कर्त्तव्य इति शासनम् ॥ ९ ॥
आगमस्य वयं कर्तुं व्यवसायमुपास्महे ।
तत्रेदं यदि कर्तव्यमागमार्थतया भवेत् ॥ १० ॥
भवन्तो नोऽनुजानन्तु भवेमाज्ञाकरा वयम् ।
क्रियतामिति निश्शङ्कमनुज्ञातो द्विजोत्तमैः ॥ ११ ॥
निवेदयेत् पुनश्चेदं तेभ्यो लोकहितेप्सया ।
यथैव देवपूजायां विनियुक्तमनिन्दितम् ॥ १२ ॥

---

१. 'राजरा' क. ख. पाठः.  २. 'स्मृ' घ. पाठः.

द्रव्यं पुष्पादिकं पश्चान्निर्माल्यमिति निन्द्यते ।
एवं बिम्बमदुष्टं यत् पूजायां विनियुज्यते ॥ १३ ॥
तदेव दूषितं पश्चान्निर्माल्यमिति निन्द्यते ।
तस्माद् दुष्टमिदं बिम्बं भवद्भिर्मुक्तसंशयैः ॥ १४ ॥
निर्माल्यबुद्ध्या त्यक्तव्यमिति शास्त्रस्य शासनम् ।
तत आघोषयेयुस्ते ब्राह्मणा मुक्तसंशयाः ॥ १५ ॥
शान्तये यजमानस्य गुरोर्ऋत्विग्जनस्य च ।
राज्ञो जनपदस्यास्य ग्रामस्य नगरस्य च ॥ १६ ॥
ततो निष्क्राम्य देवेशमात्मसात्कृत्य वा गुरुः ।
आवाह्य कलशे वाथ बिम्बोद्धारविधिं चरेत् ॥ १७ ॥
प्रासादस्याग्रतः कुर्याच्छान्तिहोमं यथाविधि ।
दूर्वास्त्रिमधुराक्ता वा समिधः क्षीरिणां तु वा ॥ १८ ॥
सावित्र्या तत्र होतव्याः सोऽज्याश्चाष्टसहस्रशः ।
व्याहृत्युपनिषद्भिश्च शान्तिं पश्चात् तु वाचयेत् ॥ १९ ॥
शान्तिरस्तु शिवं चास्तु पुष्टिरस्त्वस्तु मङ्गलम् ।
स्वस्ति चास्तु समृद्ध्यस्तु सर्वेषां सन्तु सम्पदः ॥ २० ॥
गोब्राह्मणेभ्यः क्षत्रेभ्यो विट्छूद्रेभ्यस्तथैव च ।
लोकेभ्यः सर्वभूतेभ्यो राज्ञे जनपदाय च ॥ २१ ॥
राष्ट्रायास्मै विशेषेण ग्रामाय नगराय च ।
अस्मै च यजमानाय सभृत्याय सबन्धवे ॥ २२ ॥
बिम्बोद्धारविधेरस्तु साकल्यमिति घोषयेत् ।
आचार्यं यजमानोऽत्र प्रणिपत्य प्रसाद्य च ॥ २३ ॥

१. 'सर्वैश्चा' क. पाठः.

हेमरत्नादिदानेन महता परितोषयेत् ।
आत्मीयं च धनं सर्वमात्मानं च निवेदयेत् ॥ २४ ॥
हिरण्यं गां महीमश्वान् रत्नं वासश्च कुञ्जरम् ।
भूषणानि स्त्रियो दासानासनं शयनं तथा ॥ २५ ॥
यच्चान्यद्[1] दयितं शक्यं तत्तद् दद्यादिति स्थितिः ।
मूर्तिपेभ्यश्च दातव्यं तत्पादमधिकं तु वा ॥ २६ ॥
देहन्यासं ततः कृत्वा प्रलयोदयसंयुतम् ।
आचार्यः सगणो बिम्बमलङ्कुर्यात् प्रयत्नतः ॥ २७ ॥
ततस्ते कृतपुण्याहा बद्धोष्णीषाः समाहिताः ।
वाग्यताः कृतरक्षाश्च तिष्ठेयुर्बद्धकौतुकाः ॥ २८ ॥
आचार्यो यजमानस्य हेमजं कङ्कणं करे ।
चक्रमन्त्रेण बध्नीयादलाभे पीतमालिकाम् ॥ २९ ॥
जप्त्वा सिद्धार्थकान् दद्यादाचार्यः स्थपतेरपि ।
ततस्तूर्यरवैर्दिक्षु वेदनादैश्च घोषयेत् ॥ ३० ॥
ऋषभं कुञ्जरं वाग्रे स्थापयेत् समलङ्कृतम् ।
बालरज्ज्वादिभिर्बद्ध्वा यन्त्रयोगं च कल्पयेत् ॥ ३१ ॥
उच्छ्वञ्चस्व तथा नासत्सूक्तमा ते पितस्तथा ।
अनन्तसूक्तं स्वादिष्ठं तथान्यानि शुभानि च ॥ ३२ ॥
यौधाजयं रौरवं च बृहत्साम रथन्तरम् ।
कयाशुभा ज्येष्ठसाम वैराजं यच्च शोभनम् ॥ ३३ ॥
यजुष्पवित्रं सकलं वरिष्ठं विष्णुदैवतम् ।
पौरुषं पावमानं च पञ्चोपनिषदस्तथा ॥ ३४ ॥

---

१. 'दुचितं' क. ख. पाठः.

चक्रशार्ङ्गासिविद्याश्च रूपविद्याश्च मूर्तयः ।
गुणत्रयमहंकारो भूतादीन्यपराणि च ॥ ३५ ॥

आवर्तयद्भिर्ऋत्विग्भिराचार्यः सहितः स्वयम् ।
विसृज्य पीठिकाबन्धं सौवर्णैर्लाङ्गलैः शुभैः ॥ ३६ ॥
अष्टाक्षरेण निर्माल्यं विष्वक्सेनोऽहमुद्धरे ।
इति कृत्वा स्थिरां बुद्धिं भूर्भुवः सुवरोमिति ॥ ३७ ॥
गर्तादुत्थापयेद् बिम्बं यन्त्रयोगेन साधकः ।
वेदस्तोत्रजपैस्तूर्यैर्जयशब्दैश्च पुष्कलैः ॥ ३८ ॥
नृत्तगीताट्टहासैश्च ततो बिम्बं नयेद् बहिः ।
अहतैर्वसनैः श्लक्ष्णैः समन्तात् परिवेष्ट्य तु ॥ ३९ ॥
कृत्वोपचारं गायत्र्या प्रणवाद्यन्तरुद्धया ।
दक्षिणे स्थण्डिलं कृत्वा सैकतं चतुरश्रकम् ॥ ४० ॥
तिलान् विकीर्य दर्भांश्च प्रतिमां तत्र शाययेत् ।
क्षालयेत् तत्र तां तोयैर्गन्धपुष्पैश्च पूजयेत् ॥ ४१ ॥
त्रिरप्रदक्षिणं कृत्वा सतिलैस्तण्डुलैः किरेत् ।
ततोऽन्यैर्वसनैः श्लक्ष्णैराच्छाद्यारोप्य वाहनम् ॥ ४२ ॥
छत्रध्वजपताकाभिश्चामरैश्चोपशोभितम् ।
महाजनरवैर्युक्तं नदीं सागरगां[2] नयेत् ॥ ४३ ॥
तत्रागाधे ततो ध्यात्वा विष्वक्सेनं चतुर्भुजम् ।
तन्मन्त्रेण नमोन्तेन बिम्बमप्सु विनिक्षिपेत् ॥ ४४ ॥
पीठं ब्रह्मशिलां चापि निर्माल्यमिति चिन्तयेत् ।
तत्र स्नात्वा ततो गत्वा प्रासादं सर्व एव ते ॥ ४५ ॥

१. 'रवैस्तू' क. पाठः. २. 'मा' ख. ग. घ. पाठः. ३. 'बा' ख. ग. पाठः.

शोधयित्वा बहून् विप्रान् भोजयित्वा यथाबलम् ।
गां निवास्य चतूरात्रं त्रिरात्रं वापि यत्नतः ॥ ४६ ॥
प्रभूतैर्यवसं तोयं ताभ्यो दद्याच्च रात्रिषु ।
त्रिदिनं कारयित्वैवमन्नाद्यं स्वस्तिवाचनम् ॥ ४७ ॥
राक्षोघ्नं वास्तुहोमं च वेदस्तोत्रादिकीर्तनम् ।
आदौ कृत्वात्र पुण्याहं ततो मन्त्रैः पृथग्विधैः ॥ ४८ ॥
प्राक्षयेद् बहिरन्तश्च तोयैर्गन्धैस्तथाक्षतैः ।
होमयेत् पञ्चदुर्गाभिर्मूलोपनिषदादिभिः ॥ ४९ ॥
मन्त्रैरपि च राक्षोघ्नैर्वेदैस्तूर्यैश्च नादयेत् ।
जलेऽधिवासितं बिम्बमाहृत्य सह मूर्तिपैः ॥ ५० ॥
कृत्वा शुद्धिं यथान्यायं मण्डपे शाययेद गुरुः ।
मूर्तिपा जुहुयुर्दिक्षु जपेयुश्चैव मन्त्रिणः ॥ ५१ ॥
वैदिकांस्तान्त्रिकान मन्त्रान् नामानि च सहस्रशः ।
ओंकारमग्रतः कृत्वा पठेद् वैष्णवमन्त्रकान् ॥ ५२ ॥
प्रणवेन च संस्पृश्य हृदि सञ्चिन्त्य माधवम् ।
हृदयं देवदेवस्य विष्णोर्विक्रमणेन च ॥ ५३ ॥
इति मन्त्रेण संस्पृश्य मुखं चक्षुश्च नासिकाम् ।
हिरण्यगर्भमन्त्रेण सर्वाङ्गं संस्पृशेत् पुनः ॥ ५४ ॥
पौरुषेण च सूक्तेन तमादायाधिवासितम् ।
रत्नन्यासादिसंयुक्तं पूर्ववत् त्रिः प्रदक्षिणम् ॥ ५५ ॥

---

१. 'गां', २. 'तं', ३. 'र' च. पाठः. ४. 'तं स्पृष्ट्वा हृ' क. च. पाठः. ५. 'नः ॥ एवं पुरुषसू', ६. 'दि कर्तव्यं पू' च. पाठः.

गत्वा वेदजयस्तोत्रनृत्तगीतपुरस्सरम् ।
ध्रुवा द्यौरिति संस्थाप्य वषट् तं इति कीर्तयेत् ॥ ५६ ॥
प्रणवेन तु संयुक्तं परमेष्ठ्यादिविद्यया ।
एकैकं विन्यसेद् ध्यात्वा पञ्चोपनिषदात्मकम् ॥ ५७ ॥
क्रमान्मूर्धास्यहृन्नाभिपादेष्वोमिति सर्वतः ।
नारायणेन सूक्तेन पौरुषेण च सर्वतः ॥ ५८ ॥
विश्वतश्चक्षुरित्येनं सकलं भावयेत ततः ।
कलशस्थं नवे बिम्बे सङ्क्राम्यैवं समाचरेत ॥ ५९ ॥
प्रतिष्ठाविधिना सर्वमुत्सवान्तं प्रयोजयेत् ।
सावित्र्या पञ्चभिश्चात्र शान्तिहोमं प्रकल्पयेत् ॥ ६० ॥
बाहुच्छेदे परित्यागः प्रतिमायाः करे तथा ।
यस्मिन्नवयवे भग्ने वैरूप्यं तत्र तां त्यजेत् ॥ ६१ ॥
यद्येककरशाखा तु भग्ना द्वे वात्र न त्यजेत् ।
अतःपरं परित्यागस्त्रिच्छेदे कैश्चिदिष्यते ॥ ६२ ॥
पादशाखापरिच्छेदेऽप्येवमन्यत्र कल्पयेत् ।
स्फुटिते च परित्यागो भिन्ने च परिकीर्तितः ॥ ६३ ॥
सौवर्णी साङ्गुलिः कार्या या भग्ना द्वे च ते तथा ।
लोहादौ चेच्छिलाबिम्बे ताम्रेण रजतेन वा ॥ ६४ ॥
हेतिच्छेदे तु सर्वत्र सौवर्णं तत् प्रकल्पयेत् ।
मकुटे कुण्डले चैव वस्त्रादिषु च शस्यते ॥ ६५ ॥

---

१. 'क' ङ. च. पाठः. २. 'वं', ३. 'सकलस्थं' च. पाठः ४. 'ज्य' च, 'ज्यं त्रिच्छे', ५. 'त्यागेऽप्ये' ख. ग. पाठः. ६. 'ये च. पाठः.

प्रतिमायाः परित्यागे चोराहृतिवदिष्यते ।
स्थापनं पूजनं चात्र न ग्राह्यं पीठमक्षतम् ॥ ६६॥
अनुयागे नवान्येव द्रव्याणि शुभदानि तु ।
पिण्डिकापच्छिलादीनि द्वयोः पीठं तु गर्ह्यते ॥ ६७॥
गहने निखनेच्छैलं[1] दारवं वह्निना दहेत् ।
दद्याद् रत्नं च लोहं च कुर्याद् विद्राव्य वा पुनः ॥ ६८॥
पार्थिवं निक्षिपेदप्सु[2] सर्वं पार्थिवमेव वा ।
भग्ने बिम्बेऽपि देवस्य प्रासादो यत्र लक्ष्यते ॥ ६९॥
तत्रापि कारयेद् बिम्बं सौवर्णमपरं पुनः ।
लोहजं रत्नजं वाग्रे स्थापितं विधिनार्चयेत्[3] ॥ ७०॥
तदप्यमन्त्रकं पूज्यमिति चाहुर्मनीषिणः ।
पौराणिकेषु बिम्बेषु देवादिस्थापितेष्वपि ॥ ७१॥
न्यायोऽयमेवं[4] विज्ञेयः स्वयं वा यत्र जायते ।
संशये बहुभिः सार्धं वैष्णवैर्वेदपारगैः ॥ ७२॥
देवस्य महतीं पूजां कृत्वा भक्तिपुरस्सरम् ।
वेदतूर्यादिनिर्घोषैर्द्वादश्यां श्रवणेऽपि वा ॥ ७३॥
उपोष्य दर्भशय्यायां स्वपेयुर्देवसन्निधौ ।
आचक्ष्व देव ! देवेश ! प्रपन्नोऽस्मि तवान्तिकम् ॥ ७४
स्वप्ने सर्वाणि कार्याणि हृदयस्थानि यानि नः ।
इति विज्ञाप्य सुप्तानां स्वप्नोऽत्रानुगुणो भवेत् ॥ ७५॥
द्विस्त्रिर्वापि तथा कृत्वा कृत्यं निश्चिनुयाद् बुधः ।
प्रासादं तु नवं कुर्याद् वृत्तं वा चतुरश्रकम् ॥ ७६॥

१. 'क्षिपेच्छै' क. ख. ग. पाठः. २. 'वं', ३. 'न' च. पाठः.
४. 'वं' क. पाठः.

पूर्ववच्चतुरश्रे वा वृत्तं वृत्ते तु नान्यथा।
भूमिहानिर्न कर्तव्या नाङ्गहानिश्च तत्र वै ॥ ७७ ॥
देवतारहितं स्थानमाश्रयन्त्येव नारकाः।
तस्मात् तत्परिहारार्थं रक्षां कुर्याद् विशेषतः ॥ ७८ ॥
गोवासं पुरधूपं च दीपमग्निं च संस्कृतम्।
पञ्चगव्यं द्विजान् दर्भान् सर्षपांश्च न हापयेत् ॥ ७९ ॥
राक्षोघ्नं च जपेत् सूक्तं नारसिंहं सुदर्शनम्।
स्तोत्राणि च प्रदोषेषु कुर्याच्च स्वस्तिवाचनम् ॥ ८० ॥

ॐ

स्वस्तयेऽस्तु सदा विष्णुः स्वस्तयेऽस्तु चतुर्मुखः।
स्वस्तयेऽस्तु सदा रुद्रः स्वस्तयेऽस्तु शतक्रतुः ॥ ८१ ॥
स्वस्तयेऽस्तु सदा वह्निः स्वस्तयेऽस्तु यमः सदा।
स्वस्तये निर्ऋतिः ख्यातः स्वस्तये वरुणः सदा ॥ ८२ ॥
स्वस्तयेऽस्तु सदा वायुः स्वस्तयेऽस्तु धनेश्वरः।
स्वस्तयेऽस्तु सदेशानः स्वस्तयेऽस्तु मरुद्गणः ॥ ८३ ॥
स्वस्तये सन्तु वसवो रुद्राश्च स्वस्तये सदा।
आदित्याः स्वस्तये सन्तु मुनयः स्वस्तये सदा ॥ ८४ ॥
गन्धर्वाः स्वस्तये सन्तु स्वस्तये सन्तु किन्नराः।
स्वस्तये सन्तु नागाश्च स्वस्तये सन्तु पन्नगाः ॥ ८५ ॥
स्वस्तये सन्तु विद्येशाः स्वस्तयेऽप्सरसः सदा।
[1]नद्यश्च स्वस्तये सन्तु सरितः स्वस्तये सदा ॥ ८६ ॥

१. 'स्वस्तये सन्तु नद्यश्च स' च. पाठ.

सागराः स्वस्तये सन्तु शैलाश्च स्वस्तये सदा ।
स्वस्तये मातरः सन्तु पितरः स्वस्तये सदा ॥ ८७ ॥
देवपारिषदाः सर्वे स्वस्तये सन्तु नः सदा ।
स्वस्ति भागवतानां तु स्वस्ति चास्त्वग्रजन्मनाम् ॥ ८८ ॥
स्वस्त्यस्तु पूजकानां तु[2] स्वस्ति चास्तु गवामपि ।
स्वस्त्यस्तु स्थावराणां तु जङ्गमानां तथैव च ॥ ८९ ॥
स्वस्ति चास्तु च मन्त्राणां स्वस्ति वै कर्मणामपि ।
बलिदानं हि देवस्य विष्णोरस्मै नमो नमः ॥ ९० ॥
यद्यद्वा क्रियते कर्म तत्तदुक्त्वा विशेषतः ।
स्वस्तिवाचनमाचार्यः कुर्यादेवं शुभं भवेत् ॥ ९१ ॥
बलिं चाष्टविधेभ्योऽर्थे[3] भूतेभ्यो दिक्षु दापयेत् ।
स्थापयित्वा नवं बिम्बं स्नपनं चोत्सवं तथा ॥ ९२ ॥
पूजयेत् पूर्ववन्नित्यमेवं सिद्धिर्भविष्यति ॥ ९२½ ॥

इति विष्णुसंहितायां[4] चतुर्विंशः पटलः ॥

---

## अथ पञ्चविंशः पटलः ।

अथ वक्ष्यामि संक्षेपादुत्पातेषु च निष्कृतिम् ।
संशोधनक्रमं चैव स्थानप्रतिमयोः क्रमात् ॥ १ ॥
उत्पतन्ति पुरस्तादित्युत्पाता भयशंसिनः ।
दिव्यान्तरिक्षभौमास्ते ज्ञेयास्तन्त्रेषु कीर्तिताः ॥ २ ॥
प्रासादगर्भपीठार्चाः शरीरत्वेन शार्ङ्गिणः ।
कल्पिताः[5] सर्वदा रक्ष्या विप्रैरुत्पातशङ्कया ॥ ३ ॥

---

१, २. 'च', ३. 'पि, ४. 'या जीर्णोद्धारपटलश्चतुर्विंशः ॥ च. पाठः. ५. 'थि' ङ. च. पाठः.

उत्पातेषूपजातेषु न कार्या पूजना हरेः ।
अस्पृश्याः प्रतिमापीठप्रासादाः साङ्गदेवताः ॥ ४ ॥
अकृतायां तु निष्कृत्यां स्पृष्टाः कुप्यन्ति देवताः ।
पूजिता वा ततो यत्नान्निष्कृतिं कारयेद् द्रुतम् ॥ ५ ॥
वितानाग्निनिभं विष्णोर्बिम्बमुत्पातदूषितम् ।
अकृतायां तु निष्कृत्यामपूज्यं सर्वथा बुधैः ॥ ६ ॥
विलम्बने तु निष्कृत्या विनश्येद् देवसन्निधिः ।
तत्स्थाः प्रेता भयं कुर्युर्व्याधिशोकादिभिर्नृणाम् ॥ ७ ॥
पतनं चलनं[1] स्वेदो हासनं[2] चैव रोदनम् ।
उत्पाटनं[3] हृतिश्चोरैर्दाहः प्रध्वंसनं बलात् ॥ ८ ॥
पीठप्रासादकेत्वस्त्रतोरणाना च पार्षदाम् ।
भङ्गश्छत्राकवल्मीककृमिकीटादिसम्भवः ॥ ९ ॥
श्वचोरव्रात्यपाषण्डिदेवलादिप्रवेशनम् ।
अर्चनं चाप्यमन्त्रज्ञैरन्यभक्तैरदीक्षितैः ॥ १० ॥
क्षुद्रान्यमन्त्रसंयोगः कालजीर्तिर्दिगाश्रयः ।
उषितैर्नीरसैर्दुष्टैः प्रतिषिद्धैश्च पूजनम् ॥ ११ ॥
अनाराधश्च निर्दोषः कालोपेक्षा प्रमादतः ।
कलहो मरणं जन्म रक्तश्लेष्माश्रुपातनम् ॥ १२ ॥
एते चान्ये च विज्ञेया उत्पाता बहुदोषदाः ।
तस्मात् सर्वप्रयत्नेन कर्तव्यमविलम्बितम् ॥ १३ ॥
प्रायश्चित्तं यथोत्साहमन्यथा सर्वनाशनम् ।
महद् बहुषु चोग्रेषु निमित्तेषु विशेषतः ॥ १४ ॥

१ 'नं भङ्गं स्वे', २. 'सश्च रो' च. पाठः. ३. 'तं चोरै' ख' ग. पाठः.

निमित्तेष्वल्पमल्पेषु सद्यो वा यत्र निष्कृतिः ।
बिम्बपीठगृहालिन्दप्राङ्गणेषु यथातथम् ॥ १५ ॥
खननादिविधिं कुर्याद् यथादोषबलाबलम् ।
खननं हरणं दाहः पूरणं गोनिवासनम् ॥ १६ ॥
विप्रोच्छिष्टं च गव्यं च सप्तैताः स्थानशुद्धयः ।
खादिरस्फ्येन चास्त्रेण खात्वा हस्तादिमानतः ॥ १७ ॥
सदोषानखिलान् पात्रैर्हृत्वा पांसून् बहिः क्षिपेत् ।
कुशदर्भादिभिर्दग्ध्वा तद्भस्मादि पुनर्हरेत् ॥ १८ ॥
सुमृद्भिः खातमापूर्य हस्तिपादैस्तु[2] याज्ञिकैः ।
गोमूत्रसिक्तमाकोट्य विप्रपादोदकैस्तथा ॥ १९ ॥
गां निवास्याशयेद् विप्रान् पायसं वैष्णवान् बहून् ।
तदुच्छिष्टे हृते सिञ्चेद् गव्यैश्च विकिरैः किरेत् ॥ २० ॥
स्थानशुद्धिरियं प्रोक्ता बिम्बशोधनमुच्यते ।
क्षालनप्लावनस्नानमार्जनानि यथाक्रमम् ॥ २१ ॥
धारावगाहनं पश्चादभिषेकोऽत्र सप्तमः ।
क्षालनं दर्भमृत्त्वग्भिस्तूष्णीं तोयैश्च शोधनम् ॥ २२ ॥
गन्धपुष्पाक्षतोपेतैरमन्त्रैः प्लावनं जलैः ।
सकूर्चैर्द्रव्ययुक्तैस्तैर्मन्त्रवत्[3] स्नानमम्बुभिः ॥ २३ ॥
पात्रे यथोक्तमापूर्य तोयं मन्त्रैः प्रपूज्य[4] च ।
*कूर्चाग्रैः प्रोक्षयेद् बिम्बं मन्त्रैस्तदिह मार्जनम् ॥ २४ ॥

१. 'य'. २. 'श्च' च. पाठः. ३. 'व्यसंयुक्तैर्म' ख. ग. पाठः.
४. 'यै' च. पाठः.

* कुशाग्रैरिति व्याख्यानुसारी पाठः.

संस्थाप्य धान्यकूर्चस्थमैशान्यां लोहसम्भवम् ।
वारुणं पात्रमापूर्य सकूर्चं सलिलैः शुभैः ॥ २५ ॥
मत्स्यौ कूर्मौ च सौवर्णौ राजतौ चात्र निक्षिपेत् ।
समृणालां सपुष्पां च पद्मिनीं क्षालितां तथा ॥ २६ ॥
वरुणं तत्र सम्पूज्य तीर्थं चावाह्य वैष्णवम् ।
पालाशादित्रिपादस्थं धारापात्रं तु लोहजम् ॥ २७ ॥
सहेमच्छिद्रमापूर्य सकूर्चं प्रतिमोपरि ।
धाराच्छिद्रा च कर्तव्या याममात्रं दिने दिने ॥ २८ ॥
समन्त्रं वारुणात् पात्रात् तोयं हृत्वात्र पूरयेत् ।
पञ्चोपनिषदो जप्या वाग्यतैर्दर्भपाणिभिः ॥ २९ ॥
स्पृशद्भिः पात्रमव्यग्रैर्ध्यायद्भिर्विष्णुमव्ययम् ।
पौरुषं पावमानं च सूक्तमन्यच्च ...णवम् ॥ ३० ॥
संहिता वाखिलान्येषां कार्योऽत्राद्यन्तयोर्जपः ।
धारान्ते पूजयेद् देवमुद्वास्य वरुणं पुनः ॥ ३१ ॥
न चाल्यं वारुणं पात्रं त्रिरात्रं यत्र जप्यते ।
हृत्वाम्भः पुनरापूर्य पूर्ववत् सर्वमाचरेत् ॥ ३२ ॥
गन्धतोयैः पयोभिर्वा धाराज्येनापि चोत्तमा ।
कार्यात्रापि च कर्तव्यं तथा वरुणपूजनम् ॥ ३३ ॥
सञ्छाद्यार्चां सुवासोभिर्दर्भैरथ समन्ततः ।
संस्थाप्य याज्ञिकैः काष्ठैः कृतं पात्रं प्रमाणतः ॥ ३४ ॥
गव्यैर्न्यस्तैः समस्तैश्च गन्धोदान्तैर्यथाक्रमम् ।
दिनेदिने यथान्यायं कर्तव्यमवगाहनम् ॥ ३५ ॥
पञ्च कुम्भांस्तु संस्थाप्य सकूर्चान् सूत्रवेष्टितान् ।
गन्धपुष्पाक्षताम्भोभिः पूर्णानुपनिषत्क्रमात् ॥ ३६ ॥

१. 'म्भान् समास्था' च. पाठः.

सपल्लवमुखान् न्यस्य चाक्रिकाश्च सतण्डुलाः ।
सम्पूज्य वाससावेष्ट्य तैरेव त्वभिमन्त्रयेत् ॥ ३७ ॥
पञ्चभिः स्नापयेदेवमभिषेकविधिः स्मृतः ।
षोडश द्वादशाष्टौ वा दीक्षिता वैष्णवा द्विजाः ॥ ३८ ॥
वेदैस्त्रिभिश्चतुर्भिर्वा नादयेयुर्दिवानिशम् ।
नववस्त्रपरीधानाः स्वाचान्ता गुरुमूर्तिपाः ॥ ३९ ॥
पुण्याहं वाचयित्वात्र यथाविधि समाहिताः ।
प्रोक्षयेयुश्च राक्षोघ्नैर्मन्त्रैः शान्तिकपौष्टिकैः ॥ ४० ॥
वैदिकैस्तान्त्रिकैश्चैव सर्वे दर्भाग्रपाणयः ।
तच्छिष्टाद्भिर्गृहं प्रोक्ष्य बहिरन्तश्च सर्वतः ॥ ४१ ॥
विकिरेत् पञ्चभिर्मन्त्रैः सगव्यैः सर्षपाक्षतैः ।
मण्डपे शोधिते वह्निं संस्कृत्य विधिवत् ततः ॥ ४२ ॥
जुहुयुर्मूर्तिपाः सर्वे कुण्डेष्वाचार्यसंयुताः ।
कृत्वा प्रधानहोमान्तं सर्वत्राग्निमुखं क्रमात् ॥ ४३ ॥
ध्यायन्तो विष्णुमव्यग्रा वह्निस्थं साङ्गमव्ययम् ।
पञ्चभिस्त्रिसहस्राज्यं जुहुयुः सर्ववह्निषु ॥ ४४ ॥
ततः समिद्घृतव्रीहितिललाजसहस्रकम् ।
क्रमादष्टाक्षरेणैव जुहुयुः सर्व एव ते ॥ ४५ ॥
पालाशीनां घृताक्तानां समिधां द्वादशोत्तरम् ।
शतं व्याहृतिभिः पश्चात् सर्वे ते जुहुयुस्ततः ॥ ४६ ॥
क्षीरेणाष्टशतं दध्ना मधुनाज्येन च क्रमात् ।
सावित्र्यैव तु ते सर्वे जुहुयुः सर्वशान्तये ॥ ४७ ॥

१. 'षेचयेत्' ख. ग. पाठः. २. 'तुर्वाद्यैर्नाद' च. पाठः.

होमावसान एतेभ्यो यजमानः स्वशक्तितः ।
हैरण्यं दक्षिणां दद्यात् ततस्तैः स्वस्ति वाचयेत् ॥ ४८ ॥
स्नपनं च यथोत्साहं कुर्यादघमवर्जितम् ।
पादौ प्रक्षाल्य सम्पूज्य दद्यादाचार्यदक्षिणाम् ॥ ४९ ॥
शक्त्या हिरण्यं क्षेत्रं च गां च विष्णुं विचिन्तयन् ।
शतमष्टोत्तरं विप्रान् वैष्णवान् सम्यगर्चितान् ॥ ५० ॥
प्रणम्योनातिरिक्तादिशान्त्यर्थं वाचयेच्छिवम् ।
चत्वारो मूर्तिपा हीने मध्येऽष्टौ द्वादशोत्तमे ॥ ५१ ॥
सवस्त्राभरणा योज्या यथादोषबलाबलम् ।
होमाध्ययनकर्तॄंश्च सदस्यान् वैष्णवान् द्विजान् ॥ ५२ ॥
स्वशक्त्या पूजयेत् सर्वानन्नपानादिभिः शुभैः ।
अहुतेष्वीशकोणेऽग्निं संस्कृत्य विधिवद् गुरुः ॥ ५३ ॥
कृत्वा प्रधानहोमान्तं कुर्यादाज्याहुतीः पुनः ।
पञ्चभिर्द्वादशाष्टार्णगायत्रीजितपौरुषैः ॥ ५४ ॥
चतुर्विंशतिशो हुत्वा शतशो वा सहस्रशः ।
अपामार्गसमिच्छिन्ना सहैन्द्री भद्रिकाञ्जलिः ॥ ५५ ॥
दूर्वा सिद्धार्थकव्रीहियवारितलहविर्घृतम् ।
इति हुत्वा ससम्पातं सगव्यं पञ्चमन्त्रितम् ॥ ५६ ॥
तोयशेषं हृदा सिञ्चेद् यत्र मध्वादिसम्भवः ।
स्नपनं च ततः कुर्यादष्टोत्तरशतादिकम् ॥ ५७ ॥
श्वस्पृष्टां शोधयित्वार्चां बहुशो गव्यशोधिताम् ।
शुद्धाद्भिस्त्वग्रसैर्गन्धैस्तीर्थतोयैश्च शोधयेत् ॥ ५८ ॥

१. 'द् विद्वान' ख. ग. पाठः.

पञ्चरात्रं त्रिरात्रं वा गवां वासं च कल्पयेत् ।
ब्राह्मणान् भोजयेत् पश्चात् पुण्याहं चात्र वाचयेत् ॥ ५९ ॥
वेदैश्च नादयेदिष्ट्वा निवेद्यान्नं बलिं हरेत् ।
नादयेत् तूर्यघोषैश्च ततो होमादि कारयेत् ॥ ६० ॥
अश्वत्थैः खदिरैः प्लक्षैः पलाशैः पाटलैर्वटैः ।
नारायणेन सूक्तेन श्रीसूक्तेन तथैव च ॥ ६१ ॥
अतो देवेति सूक्तेन नासदंहोमुचा तथा ।
संसमिद्रुद्रपादेन तथारायित्यनेन च ॥ ६२ ॥
गायत्र्या पञ्चभिश्चात्र होतव्यं विधिनैव तु ।
समाप्ते स्नपने दद्यात् पूर्ववच्चैव दक्षिणाम् ॥ ६३ ॥
अनिमित्तेन निष्क्रान्तं पुनराशु प्रवेश्य तु ।
शान्तिहोमं च कुर्वीत स्नपनं स्वस्तिवाचनम् ॥ ६४ ॥
उत्सवं तीर्थयात्रां च ब्राह्मणानां च भोजनम् ।
प्रसूते श्वसृगालाद्यैः शून्यं कृत्वा त्रिरात्रकम् ॥ ६५ ॥
पूर्वोक्तां कारयेच्छान्तिं स्थानशुद्धिं च भूयसीम् ।
दाहे पयस्विनीं धेनुं शान्तिनाम्ना समाह्वयेत् ॥ ६६ ॥
दूर्वादिकं निवेद्यास्यै पद्मपत्रे पयो दुहेत् ।
आतप्यै दधि निर्मथ्य तत् संस्कृत्याज्यमाहरेत् ॥ ६७ ॥
अपरेद्युस्तथा दुग्ध्वा दधि चैवं प्रकल्पयेत् ।
तृतीयेऽह्नि शकृन्मूत्रं क्षीरं चैव तथाहरेत् ॥ ६८ ॥
पद्मपत्रेषु सम्पूज्य क्रमान्मूत्रादिपञ्चकम् ।
पञ्चमन्त्रैस्तु संयोज्य माथित्वा प्रणवेन च ॥ ६९ ॥

१. 'ष्ट्वा'. २. 'श्वा' च. पाठः. ३ 'ऋच्य', ४. 'तु' ख. ग. पाठः.

सम्पूज्याष्टसहस्रं तु पञ्चोपनिषदो जपेत ।
तेन सम्प्रोक्ष्य सर्वत्र स्नापयेत प्रतिमां ततः ॥ ७० ॥
हृत्वा भस्मादिकं तोयैः प्लावयित्वा समन्ततः ।
गोनिवासादि कर्तव्यं प्रायश्चित्तं यथाक्रमम् ॥ ७१ ॥
चलं वा निश्चलं कुर्यादावाह्य कलशे बुधः ।
अधिवास्य यथान्यायं कुर्याद्वाथ नवीक्रियाम ॥ ७२ ॥
भग्नमुद्धृत्य वा बिम्ब तथान्यत् स्थापयेद् बुधः ।
सङ्क्रान्तमुद्धृते बिम्बे नवे संयोजयेत पुनः ॥ ७३ ॥
उद्वास्य सुस्थितं कुर्याद् बिम्बं पञ्चिलया सह[2] ।
दुर्जनस्पर्शनादौ तु शुद्धिं कृत्वास्य भूयसीम् ॥ ७४ ॥
होमादि सकलं कुर्यादुत्सवान्तं विशेषतः ।
चोराहतिस्तु दोषाणामग्रणीः परिकीर्त्यते ॥ ७५ ॥
तत्र यत्नेन कर्तव्यं विधा[3]नमतिविस्तरम् ।
चोरैरपहृतं बिम्बं यदि यत्नेन लभ्यते ॥ ७६ ॥
शोधयित्वा विधानेन स्थाप्यं तत्र तदेव तु ।
अलब्धेऽपहृते भग्ने जीर्णे वाभिनवं पुनः ॥ ७७ ॥
योनिरूपविशेषं तु न्यूनमप्यत्र नेष्यते ।
प्रासादे सति तं ध्यात्वा सकलं बिम्बसंयुतम ॥ ७८ ॥
संहृत्यावाहयेद् विद्वान् कलशे मन्त्रपूर्वकम ।
गर्भगेहेऽस्य पीठे वा सत्यावाह्य तथैव तु ॥ ७९ ॥
पीठं गर्भगृहं वापि यदा तस्य न लभ्यते ।
बिम्बस्थानात् तदावाह्य यथोक्तं विधिमाचरेत् ॥ ८० ॥

---

१. 'पुनः ।', २. 'मम ।', ३. 'ता' च. पाठः.

संक्रान्तस्य विनाशेऽपि कर्तव्यं मूलनाशवत् ।
तदङ्गदेवतानाशे तद्वदेव प्रकीर्त्यते ॥ ८१ ॥
यतस्तु देवताः सर्वा मन्त्रात्मानः प्रकीर्तिताः ।
एवमेव विसर्गः स्यान्नाशे तासामिति स्थितिः ॥ ८२ ॥
कर्तव्या पञ्चभिः शान्तिरपूजायां तु भूयसी ।
शतहोमोऽष्टकेनाथ वैष्णवानां तु भोजनम् ॥ ८३ ॥
दशानां पायसेनात्र देया शक्त्या च दक्षिणा ।
द्वादशान्तमहःसंख्यागुणितः स्यादयं विधिः ॥ ८४ ॥
स्नपनं चो[1]चतुर्मासो[2]न्महास्नाने[3]मतः परम् ।
वत्सरे शान्तिहोमे[4]न युक्तं विप्रार्चनेन च ॥ ८५ ॥
अभिमन्त्र्य हविः स्कन्नं दक्षिणेन तु पाणिना ।
अष्टाक्षरेण होतव्यं शतमाज्येन पञ्चभिः ॥ ८६ ॥
दुःशृताद्यप्सु निक्षिप्य तथा हुत्वा प[5]रं पचेत् ।
उषितेऽम्बुपयोमिश्रगव्यगन्धादिशोधनम् ॥ ८७॥
पुण्याहं शान्तिहोमं च बलिमन्नाद्यमाचरेत् ॥ ८७½ ॥

इति विष्णुसंहितायां पञ्चविंशः पटलः ॥

---

## अथ षड्विंशः पटलः ।

अथ वक्ष्यामि संक्षेपात् स्नपनस्य विधिं परम् ।
उत्तमादिविभागेन कर्तव्यं तु विचक्षणैः ॥ १ ॥
स्थापितस्य चतुर्थेऽह्नि यात्रान्ते ग्र[6]हणादिषु ।
उपसर्गेऽन्त्यसंसर्गे प्रधानपुरुषक्षये ॥ २ ॥

---

१. 'च', २. 'सं महा', ३. 'नं ततः', ४. 'मैस्तु यु' ख. ग. पाठः. ५. 'चेरुं प' च. पाठः. ६. 'श्रवणा' ख. ग. पाठः.

दीक्षाभिषेकयागान्ते मङ्गल्ये मन्त्रसाधने ।
क्षुद्रान्यमन्त्रविन्यस्ते चिरलुप्ते च पूजने ॥ ३ ॥
असान्निध्येऽभिषेके च राज्ञां वृद्ध्यर्थमेव च ।
अज्ञातदोषशान्त्यर्थं प्रत्यब्दं च यथाविधि ॥ ४ ॥
कर्तव्यं स्नपनं भक्त्या निमित्तार्थानुसारतः ।
द्वादश्यां श्रवणे पुण्ये व्यतापातेऽयनादिषु ॥ ५ ॥
जन्मर्क्षे यजमानस्य पौर्णमास्यां च कारयेत् ।
मण्डपं पूर्ववत् कृत्वा तोरणध्वजशोभितम् ॥ ६ ॥
मुक्तादामादिसङ्कीर्णं कुसुमोत्करमण्डितम् ।
कर्तव्या वेदिका मध्ये द्वात्रिंशद्यवमुच्छ्रिता ॥ ७ ॥
यावन्तः कलशा ग्राह्यास्तावान् वै वेदिविस्तरः ।
कुण्डानि कारयेद् दिक्षु मङ्गलानि च विन्यसेत् ॥ ८ ॥
ऐशान्यां स्थापिते पात्रे धान्यस्थे नववाससा ।
नदीतीर्थादिजं तोयं दीक्षितोत्पूतमाहरेत् ॥ ९ ॥
सम्पूज्य विष्णुगायत्र्या सपवित्रेण पाणिना ।
शतमष्टोत्तरं विद्वान् सकूर्चमभिमन्त्रयेत् ॥ १० ॥
इमा आपः शिवाः सन्तु शुभाः शुद्धाश्च निर्मलाः ।
पावनाः शीतलाश्चैव पूताः सूर्यस्य रश्मिभिः ॥ ११ ॥
इत्युक्त्वा शोधितां वेदिमापोहिष्ठादिभिस्त्रिभिः ।
प्रोक्ष्य गन्धाक्षतैर्गन्धैर्विकिरैश्च समन्ततः ॥ १२ ॥
द्विषट्कैरैन्द्रसौम्याग्राण्यथ सूत्राणि पातयेत् ।
कोष्ठानि चतुरश्राणि तालमात्राणि कल्पयेत् ॥ १३ ॥

१. 'गैश्च स' क. ग. ङ. पाठः.

पूरयेदङ्गुलोत्सेधा रेखाः सर्वाः सिताः समाः ।
विकिरेन्मध्यतः किञ्चित् तेनैव रजसा समम् ॥ १४ ॥
व्यत्ययात् पञ्चवर्णैर्वा कर्तव्यं पदपूरणम् ।
चतस्रो वीथयः कार्याः पूर्वाग्रा इतरास्तथा ॥ १५ ॥
शुद्धोदकान्विते पक्षे द्रव्यस्नाने न वीथयः ।
मध्यमं तु पदं ब्राह्मं दैविकं तदनन्तरम् ॥ १६ ॥
परितो मानुषं वाराः षोडशात्राष्ट दैविके ।
ब्राह्मे चाष्टदलं पद्मं कल्पयेत् कर्णिकोज्ज्वलम् ॥ १७ ॥
सर्वत्र पीठिकाः कार्याश्चतुरङ्गुलमुच्छ्रिताः ।
शालिभिः कूर्चसंयुक्तैर्मध्ये सतिलतण्डुलैः ॥ १८ ॥
गायत्र्याष्टशतं हुत्वा पूर्ववत् संस्कृतेऽनले ।
ततोऽधिवासयेच्छुद्धान् कलशानुक्तलक्षणान् ॥ १९ ॥
सूत्रेण वेष्टितान् सर्वानङ्गुलाङ्गुलमानतः ।
तारेणाधोमुखान् न्यस्य पश्चिमे दर्भसंस्तरे ॥ २० ॥
अग्न्यादीशानपर्यन्तं पङ्क्तीकृत्य विचक्षणः ।
दर्भानुपरि विन्यस्य दर्भमुद्रां च दर्शयेत् ॥ २१ ॥
प्रोक्ष्य गन्धोदकैः सर्वान् विकिरेदक्षतैः शुभैः ।
उत्तानीकृत्य चोद्धृत्य पञ्चभिः क्रमयोगतः ॥ २२ ॥
ब्राह्ममानुषदैवेषु पदेषु विनिवेशयेत् ।
अष्टाक्षरेण कुम्भेषु ततः कूर्चानि विन्यसेत् ॥ २३ ॥
शान्तिकेऽधोमुखान्येव पौष्टिके तून्मुखानि च ।
मूलेन तान् पुनः प्रोक्ष्य सपवित्रेण पाणिना ॥ २४ ॥

१. 'द्राश्च द' ख. ग. पाठः

प्रयतः प्राङ्मुखः पूर्वं ब्राह्मे स्नानोदकं न्यसेत् ।
मूलेन सर्वमूर्त्यङ्गपरिवारं हरिं स्मरन् ॥ २५ ॥
गन्धपुष्पैस्तमाराध्य वस्त्राभ्यां वेष्टयेत पुनः ।
पाद्यादीनि क्रमाद् द्रव्याण्यावाह्यावाह्य दीक्षितैः ॥ २६ ॥
पूरयेद् बहिरन्तश्च दिग्विदिक्षु समाहितः ।
पाद्यमैन्द्रे यमे वार्घ्यमाचामं वारुणे न्यसेत् ॥ २७ ॥
पञ्चगव्यं तथा सौम्ये घृतमाग्नेयगोचरे ।
नैर्ऋते दधि विन्यस्य वायव्ये क्षीरमेव च ॥ २८ ॥
क्षौद्रमीशानदिग्भागे द्वादशाक्षरविद्यया ।
उष्णोदकं भृशे चाथ कषायं वितथे तथा ॥ २९ ॥
मार्जनं भृङ्गराजे तु पुष्पदन्ते फलोदकम् ।
शोषे यवोदकं रत्नं मुख्ये लोहं तथादितौ ॥ ३० ॥
कुशोदकं तु पर्जन्ये यथावद् विनिवेशयेत् ।
गायत्र्या शेषकुम्भांस्तु पूरयेच्छुद्धवारिभिः ॥ ३१ ॥
गन्धाम्भोऽर्यमदेशेऽथ पुष्पतोयं विवस्वति ।
तथौपमानिकं मित्रे सुगन्धामलकं धरे ॥ ३२ ॥
सावित्रेऽक्षततोयं तु नालिकेरर्कमिन्द्रके ।
ऐक्षवं रुद्रदासे तु तथापि तण्डुलोदकम् ॥ ३३ ॥
अष्टाक्षरेण सर्वांस्तान् देविकान पूरयेत् क्रमात् ।
पूरितान् पूरितान् सद्यः पल्लवैरुपशोभितान् ॥ ३४ ॥

१. 'त्रा', २. 'ज', ३. 'चा, ४. 'व'. ५. 'त्र', ६. 'च प्राज' च. पाठः. ७. 'श्च' ख. ग. पाठः. ८. 'भाग तु', ९. 'वै', १०. 'भयेत् ॥' च. पाठः.

चक्रमन्त्रेण विन्यस्य चक्रिकाश्च सतण्डुलाः ।
वासोभिर्वेष्टयेत् सर्वान् नवैः केशादिवर्जितैः ॥ ३५ ॥

दर्भान् न्यस्याक्षतांश्चैव[1] मूलेन विकिरत् क्रमात् ।
अष्टाक्षरेण सम्प्रोक्ष्य स्वमन्त्रैः पूजयेद् गुरुः ॥ ३६ ॥

प्रणवेन पुनः प्रोक्ष्य गन्धतोयेन चैव हि ।
दीक्षितैर्दिक्षु होमांश्च कारयित्वाधिवासयेत् ॥ ३७ ॥

शान्तिं च पञ्चभिर्हुत्वा कारयेत् स्वस्तिवाचनम् ।
देवसन्निधये चात्र मङ्गलायाघशान्तये ॥ ३८ ॥

आशिषो वाचयेद् विद्वान् कर्माविकलमस्त्विति ।
शान्तितोयमथानीय[3] सम्पाताज्यसमायुतम् ॥ ३९ ॥

प्रोक्षयेत् कलशान् सर्वान् कूर्चाग्रेण पुनर्गुरुः ।
शुद्धा भवन्त्विमे कुम्भाः सकुशाः सापिधानकाः ॥ ४० ॥

वातातपपरीताश्च शुभलक्षणसंयुताः ।
पञ्चविंशतिधा विष्णोस्तत्त्वभेदेन तिष्ठतः ॥ ४१ ॥

द्रव्येयत्ताश्रयाः सर्वाः सङ्गच्छन्तां विभूतयः ।
शास्त्रोदितमिदं चास्तु स्नपनं देवनिर्मितम् ॥ ४२ ॥

अनेन स्नपनेनास्तु प्रसन्नो भगवान् हरिः ।
इत्युक्त्वान्यैः कृतानुज्ञो मूर्तिपैः सहितो गुरुः ॥ ४३ ॥

सोष्णीषः सोत्तरीयश्च कृतन्यासः स्वलङ्कृतः ।
नीराजनादिसंयुक्तो गच्छेद् गर्भगृहं ततः ॥ ४४ ॥

---

१. 'श्चाथ मू', २. 'प्रैः क'. ३. 'यं समानी' च. पाठः.
४. 'दीक्षितैः स', ५. 'पुनः' ख. ग. पाठः.

अष्टोत्तरशतं जप्त्वा मूलमन्त्रं पुरःस्थितः ।
द्वारं च वायुनोद्घाट्य दत्त्वार्घ्यं वाग्यतः शुचिः ॥ ४५ ॥
विश्वेनाच्छादनं हृत्वा प्रक्षाल्य प्रणवेन च ।
सृष्टिक्रमेण तत्त्वैस्तु युक्तं ध्यात्वा सुरेश्वरम् ॥ ४६ ॥
सकलीकृत्य पाद्यार्घ्यै पुनर्दत्त्वा जितादिना ।
गायत्र्या कौतुकं छित्त्वा दद्यादाचमनं पुनः ॥ ४७ ॥
मूर्ध्न्यक्षतान् सदूर्वाग्रान् पादयोश्चोमिति क्षिपेत् ।
नीराजयेत् त्रिरस्त्रेण मङ्गलानि हृदोद्दिशेत् ॥ ४८ ॥
शुभे तु तैजसे पात्रे शालितण्डुलपूरिते ।
अश्वैरश्वत्थपत्रस्थैर्नवगोमयकल्पितैः ॥ ४९ ॥
वर्णोज्ज्वलैर्यथाशोभं वर्धमानाज्यवर्तिभिः ।
उज्ज्वालाभिर्युतं मध्ये कुर्यान्नीराजनं त्विदम् ॥ ५० ॥
पूजाद्रव्याणि कल्प्यानि शोभनान्यत्र दीक्षितैः ।
शालिपिष्टं निशाचूर्णं हेमरत्नाक्षतानि च ॥ ५१ ॥
स्नानोदकस्य चाङ्गानि संयोज्यानि समासतः ।
दूर्वाश्यामाकपद्मानि विष्णुपर्णीति पाद्यकम् ॥ ५२ ॥
सिद्धार्थं गन्धपुष्पं च फलं यवतिलाक्षतम् ।
कुशाग्रं चार्घ्यमष्टाङ्गं कल्पयेच्च समासतः ॥ ५३ ॥
तक्कोलजातिकर्पूरलवङ्गकुसुमान्वितम् ।
चतुरङ्गं तथाचामं कल्पयेत् तत्र साधकः ॥ ५४ ॥
अश्वत्थोदुम्बरब्रह्मवटबिल्वविकङ्कतैः ।
शमीभिः खदिरैः कुर्यात् कषायं त्वग्भिरेव च ॥ ५५ ॥

१. 'जि' क. ग. घ. ङ. पाठः. २. 'पू', ३. 'यि' च. पाठः.
४. 'शमीवटब्रह्मवि', ५. 'सबिल्वख' घ. ङ. पाठः. ६. 'ह्नि' च. पाठः.

सहा निशा सदाभद्रा शिरीषं सूर्यवर्तिनी ।
कुशाग्रं च षडङ्गानि मार्जने कथितानि तु ॥ ५६ ॥
कदलीनालिकेराम्रधात्रीपनसडाडिमैः ।
सभं[1]व्यबिल्वैरष्टाङ्गं फलतोयं चै[2] कल्पयेत् ॥ ५७ ॥
वज्रमौक्तिकवैडूर्यपद्मरागप्रवालकैः ।
पञ्चाङ्गं रत्नतोयं स्याल्लोहं हेमादिपञ्चकम् ॥ ५८ ॥
सेव्यार्त्य[3]म्बुजटास्रो[4]यामुरशीतैस्तु गन्धकम् ।
जातिस्त्रीमल्लिकाकुन्दनन्द्यावर्ताब्जचम्पकैः ॥ ५९ ॥
यूथिकाबकुलाभ्यां तु[5] कर्तव्यं कुसुमोदकम् ।
शङ्खारिताक्ष्यकूर्मैश्चै[6] लोहजैरौपमानिकम् ॥ ६० ॥
आद्याङ्गसितरालाभे पाद्यादीनां प्रशस्यते ।
पितरः श्रीसरस्वत्यौ दक्षविष्णूशनेन्दवः ॥ ६१ ॥
इन्द्रार्कयमविश्वाख्याः कुबेरो वायुरप्यजः ।
वसवश्चैव सावित्री पाद्यादिद्रव्यदेवताः ॥ ६२ ॥
गन्धर्वो[7] वरुणस्ताक्ष्यो भूमिर्निर्ऋतिरेव च ।
श्रीधरश्च नृसिंहोऽश्वमुखो मध्ये परः पुमान् ॥ ६३ ॥
इदं विष्णुर्हिरण्यवर्णा आपोहिष्ठा प्रजापते ।
तेजोऽसि च दधिक्राव्ण आप्यायस्व तथा मधु ॥ ६४ ॥
अथाकृष्णेन चाश्वत्थे[8] भद्रं कर्णेभिरेव च ।
गणानां वायवायाहि ब्रह्मजज्ञानमेव च ॥ ६५ ॥

---

१. 'ह', २. 'प्र', ३. 'त्य', ४. 'स्रा', ५. 'च', ६. 'स्तु', ७. 'र्वा वारु' च. पाठः ८. 'त्थ' ख. ग. पाठः.

उपत्वाग्ने देवस्यत्वा बर्हिर्मन्त्राः प्रकीर्तिताः ।
विष्णोरराटं तत्त्वां च सुवर्णं स्योनापृथिव्यपि ॥ ६६ ॥
शन्नो यादिव्यौ यासां च परोमात्रेति दैविके ।
मध्येऽतोदेवसूक्तं च सर्वत्रान्ते स्वपूरणम् ॥ ६७ ॥
पाद्यादिमध्यपर्यन्तं स्नानमंत्र प्रकीर्तितम् ।
प्रतिद्रव्यं समभ्यर्च्य धूपयित्वा निवेदयेत् ॥ ६८ ॥
सकलीकृत्य मूलाङ्गैर्मुद्राः सम्यक् प्रदर्श्य च ।
नीराज्यार्घ्यादिभिः साङ्गं यथान्यायं प्रपूजयेत् ॥ ६९ ॥
एभिरेवाखिलैर्द्रव्यैः स्नापयेदङ्गदेवताः ।
चतुर्विधं निवेद्यान्नं सोपदंशं घृताप्लुतम् ॥ ७० ॥
बलिं च सर्वतो दद्याद् भूतेभ्यः सार्वकामिकम् ।
सार्ववर्णिकमन्नाद्यं कुर्याच्चैवानिवारितम् ॥ ७१ ॥
आचार्यं पूजयेत् कर्ता दक्षिणाभिः समूर्तिपम् ।
होमाध्ययनकर्तॄंश्च सदस्यान् वैष्णवांस्तथा ॥ ७२ ॥
ब्राह्मणान् वैष्णवाञ् शान्तान् सम्पूज्य द्वादशावरान् ।
शक्त्या च दक्षिणां देयात् कुर्यात् तैः स्वस्तिवाचनम् ॥
व्यत्यस्तोनातिरिक्तादिदोषशान्तिस्ततो भवेत् ।
द्रव्यैरूनशतार्धेन सैकाशीत्या शताष्टभिः ॥ ७४ ॥
षडध्यर्धशतैः सप्तदशाढ्यद्विशतेन च ।
सद्विपञ्चाशता तेन त्रिभिर्वा पञ्चाभिः शतैः ॥ ७५ ॥

१. 'ग्ने च दे', २. 'स्य ब' ङ. च. पाठः. ३. 'त्त्वं' क. पाठः.
४. 'व्य'. ५. 'मेवं प्र', ६. 'पूजयि'. ७. 'लैर्द्रव्यै' ८. 'ताम्',
९. 'दत्त्वा कु', १०. 'तथाष्ट' च. पाठः.

कुम्भोत्तरसहस्रान्तं स्नानमेवं प्रकल्पयेत् ।
इति सम्यक् समाख्यातं विष्णोः स्नपनमुत्तमम् ॥ ७६ ॥
ऐहिकामुत्रिकान् कामान् सम्यक् कृत्वा यदाप्नुयात् ॥

इति विष्णुसंहितायां षड्विंशः पटलः ॥

---

## अथ सप्तविंशः पटलः ।

अथ वक्ष्यामि संक्षेपात् प्रोक्षणादिविधिक्रमम् ।
नवीकरणमुद्दिश्य कार्यं सर्वं यथाक्रमम् ॥ १ ॥
सम्मृज्य सर्वतो गेहं कपिलागोमयेन चै ।
तन्मूत्रेण च तेनात्र प्रोक्षयेच्छामिति ब्रुवन् ॥ २ ॥
चतुर्दिक्षु तँथा कृत्वा सगर्भगृहमादितः ।
तूष्णीं मन्त्रैश्च सम्प्रोक्ष्य शुद्धोदैर्मन्त्रवारिभिः ॥ ३ ॥
इमा आपः शिवा गव्यैः पञ्चोपनिषदेन च ।
सर्वतश्चक्रसञ्ज्ञैर्विकिरेत् सर्षपाक्षतैः ॥ ४ ॥
संशोध्य मण्डपं चाग्रे तोरणध्वजमण्डितम् ।
शयनं कल्पयेत सम्यक् कुसुमोत्करैसंयुतम् ॥ ५ ॥
ततः सुरक्षितं कृत्वा पुण्याहं तत्र वाचयेत् ।
कर्मार्चां स्थापयित्वाद्भिः सरत्नाभिश्च पञ्चभिः ॥ ६ ॥
तीर्थोदैश्च त्रयीसारसूक्तैः स्नपनमाचरेत् ।
नवाभ्यां शुक्लवस्त्राभ्यां वेष्टयित्वाक्षरेण तु ॥ ७ ॥

---

१. 'स्रैस्तु स्ना' क. ख. पाठः. २. 'णस्य वि'. ३. 'तु'. ४. 'य', ५. 'रशोभित' च. पाठः. ६. 'वासयि' क. घ. ङ. पाठः.

उपवीतमथाद्येन मकुटं मध्यमेन तु ।
उत्तरीयं तृतीयेन पुंबीजेन च भूषणम् ॥ ८ ॥
सर्वेण गन्धपुष्पाद्यैरिष्ट्वा पुण्याहमाचरेत् ।
ओङ्कारं भगवन् सर्वव्यापिन् सर्वपदं पुनः ॥ ९ ॥
भूताधिपत इत्येवं सर्ववेदपदं पुनः ।
सारमेयेत्यतः सर्वदेवाधिपत इत्यपि ॥ १० ॥
एह्येहि पुरुषेत्येतन्महापुरुषशब्दवत् ।
अन्तादिमध्यभूतेति परात्परतरेति च ॥ ११ ॥
व्यक्ताव्यक्तपदं पश्चात् स्थूलसूक्ष्ममहापदम् ।
योगिन् नम इति स्वाहाशब्दान्तेन तमाह्वयेत् ॥ १२ ॥
सकलीकृत्य मूलेन हृदयादिभिरोमिति ।
दद्यात् पाद्यं तथाचाममिमंगन्धानुलेपनम् ॥ १३ ॥
इमाः सुमनसः पुष्पं धूपं चैव वनस्पतेः ।
शुभं ज्योतिः प्रदीपं च दद्यादर्घ्यं दशाङ्गवत् ॥ १४ ॥
आपः सिद्धार्थका दूर्वा अक्षतास्तिलतण्डुलाः ।
क्षीरं यवाश्च माषाश्च कुशाग्राणीति तद् विदुः ॥ १५ ॥
ओन्नमःपदमादौ तु ततः पुरुषोत्तमाय च ।
ततः समस्तलोकाधिपतयेऽर्घ्यमनन्तरम् ॥ १६ ॥
निवेदयामिसंयुक्तो नमःस्वाहेत्ययं मनुः ।
भूयश्चाचमनं दद्यात् पञ्चभिः स्नापयेत् पुनः ॥ १७ ॥

---

१. 'मे' च. पाठः. २. 'तः' घ. ङ: पाठः. ३. 'स' ख. ग. ङ. पाठः. ४. 'ति', ५. 'मे' ख. ग. पाठः. ६. 'बृहस्प' घ. ङ. पाठः. ७. 'ति' च., 'तः' ख. पाठः

पूर्ववद् वस्त्रभूषादि पाद्याचमनमर्चनम्[2] ।
बद्ध्वाथ कौतुकं धेनुप्रदानं स्वस्तिवाचनम् ॥ १८ ॥
कृत्वाधिवासयेद्धोमान्[3] पूर्ववद् दिक्षु कारयेत् ।
ऋग्यजुस्सामाथर्वज्ञा जुहुयुर्दिक्षु दीक्षिताः ॥ १९ ॥
क्रमाच्छाब्दिकनैरुक्तच्छन्दश्शिक्षाविदोऽन्यतः ।
ज्योतिःकल्पेतिहासज्ञाः पुराणज्ञाः सदस्यकाः ॥ २० ॥
मीमांसान्यायसाङ्ख्यज्ञा वेदान्तज्ञाश्च साक्षिणः ।
गायत्र्या तु मथित्वाग्निमक्षरैः प्रोक्ष्य चाष्टभिः ॥ २१ ॥
तद्युक्तैस्तैर्निषेकादि कृत्वा पूर्णां प्रदाय च ।
विहृत्याग्निमुखं कृत्वा जुहुयुः सर्व एव ते ॥ २२ ॥
समिधः क्षीरिजा[4] ब्राह्मीरथ पालाश्य एव वा ।
पृथगष्टसहस्राणि घृताक्ता मन्त्रसम्मिताः[5] ॥ २३ ॥
ततः प्रोक्ष्य जलैर्बिम्बं सदस्येभ्यो निवेदयेत् ।
सुहुताः समिधः पूर्वमस्माभिः शास्त्रदृष्टिभिः ॥ २४ ॥
शं भवन्तो वदन्त्वत्र प्रीयतां च जनार्दनः ।
तत ओं स्वस्ति भवन्तो ब्रुवन्त्विति विधानतः ॥ २५ ॥
ओं स्वस्ति शान्तिरित्यष्टौ सदस्या ब्रूयुरादरात् ।
ओं स्वस्ति शान्तिः सुहुतं भवत्विति गुरुर्वदेत् ॥ २६ ॥
सदस्यानुमताः[6] पश्चादाज्येन जुहुयुस्तथा ।
आज्यभागा हुतास्तावदित्युक्त्वा शं ब्रुवन्त्विति ॥ २७ ॥
निवेदयेयुरष्टौ ते वदेयुश्च शमस्त्विति ।
आचार्य ओं शं सुहुतं भवत्विति[7] तदा वदेत् ॥ २८ ॥

---

१. 'द्यमाच', २. 'नार्च', ३. 'सं यद्धो', ४. 'र', ५. 'तान्', ६. 'ताश्चादावाज्ये', ७. 'न्त्वि' च. पाठः.

चरुं हुत्वा निवेद्यं तु चरुहोमः कृतस्त्विति ।
ओं मङ्गलं ब्रुवन्त्वन्ते तेऽपि मङ्गलमस्त्विति ॥ २९ ॥
ओं मङ्गलं च सुहुतं भवत्विति गुरुर्वदेत् ।
पुनराज्यं तथा हुत्वा निवेद्यं प्राग्वदेव तु ॥ ३० ॥
शमित्यत्र सदस्यैश्च वक्तव्यं गुरुणा तथा ।
सर्वव्याहृतिभिर्होमाः कर्तव्यास्तैर्विधानतः ॥ ३१ ॥
आद्यन्तयोः परीषेकः कार्यः पूर्णा तथान्ततः ।
एवं हुत्वा तथा सर्वे जुहुयुश्चावसानिकम् ॥ ३२ ॥
इन्द्रविष्णुमरुद्भ्योऽग्निधर्मनेतृभ्य एव च ।
साध्येभ्यश्च दिशापालैः सर्वदेवगणैः सह ॥ ३३ ॥
व्याहृत्याग्निवायुशक्रवरुणब्रह्मविष्णुभिः ।
अश्विभ्यां गोपतियमाग्निविष्णुवसुभास्करैः ॥ ३४ ॥
विश्वभूतदिशापालनिर्ऋतीरौद्ररूपकैः ।
विष्णवे च पुनः शूलपाणये च यमाय च ॥ ३५ ॥
सकालधर्मो दण्डी च त्र्यम्बको वरुणः पुनः ।
विष्णुर्मित्रोऽथ परमेष्ठ्यादित्यभूतसमुद्रवान् ॥ ३६ ॥
आपगावायुविष्णुभ्यो मरुद्भ्यो जातवेदसे ।
इन्द्राय सर्वलोकेभ्यो ब्रह्मणे विश्वकर्मणे ॥ ३७ ॥
सोमाय सोमपार्षद्भ्यो ग्रहनक्षत्रसंयुतैः ।
तारागणैर्भूतभौमदिव्यनागैश्च होमयेत् ॥ ३८ ॥
सर्वाश्च देवता रुद्रविश्वरूपाख्यविष्णवः ।
ब्रह्मा रुद्राः सर्वदेवाः सहविघ्नैर्गणाधिपैः ॥ ३९ ॥

१. 'दा' ख. ग. पाठः. २. वें व्या' क. ख. पाठः. ३. 'स्ते विधा' क. पाठः. ४. 'रूपस' च. पाठः. ५. घ्नगणा' क. पाठः.

आदावन्ते च योक्तव्यास्तथा व्याहृतयः पृथक् ।
ससम्पातैस्ततः कुम्भं पूरयेच्छान्तिवारिभिः ॥ ४० ॥
देवस्योत्तरतो विद्वान् संस्थाप्य सकमण्डलुम् ।
सर्वतीर्थाहृतैः सर्वसमुद्रादाहृतैरपि ॥ ४१ ॥
प्राक्स्रोतसीभ्यो[1] वापीभ्यः प्रत्याहृतैरथाम्बुभिः ।
सरत्नकैः सपवित्रैः कलशं पूरयामि च ॥ ४२ ॥
सर्वद्वयं ततो व्यापिन् सर्वलोकाधिसंयुतम् ।
पतये नमः स्वाहेति तारादिः पूरणे मनुः ॥ ४३ ॥
अनेन मन्त्ररूपेण पूरयित्वा कमण्डलुम् ।
वेष्टयेत् क्षौमपट्टेन सापिधानमलङ्कृतम् ॥ ४४ ॥
शेषैः शान्त्युदकैः पूर्णं पूरयित्वान्यमादितः ।
सापिधानमलङ्कृत्य क्षौमाभ्यां परिवेष्ट्य च ॥ ४५ ॥
गन्धादिभिरथाभ्यर्च्य कलशं च कमण्डलुम् ।
कलशं सर्वकल्याणं गृहीत्वा प्रोक्षकः शुचिः ॥ ४६ ॥
सर्वमङ्गलसंयुक्तो नवाम्बरधरो हरिः ।
स्वयं भूत्वा[2] जपेन्मन्त्रं[3] शनैर्गच्छेत् प्रदक्षिणम् ॥ ४७ ॥
आधाय सकुशे हस्ते सव्ये तूपरि दक्षिणम् ।
तथा कमण्डलुं चान्यो गृहीत्वा च तदग्रतः ॥ ४८ ॥
सकुशां पातयेद् धारामविच्छिन्नामनुत्कटाम् ।
शन्नोदेव्यणोरणीयान्मन्त्रद्वयमुदाहरेत् ॥ ४९ ॥
प्रासादान्तश्च संशोध्य तथा कृत्वा विचक्षणः ।
कारयेद् बिम्बशुद्धिं च युक्तितो मूर्तिपैर्गुरुः[4] ॥ ५० ॥

१. 'से' च. पाठः. २. 'कृ'. ३. 'पे'. ४. 'तु' ख. ग. पाठः.

शान्तिं कृत्वा तदग्रे तु कौतुकस्नानमाचरेत् ।
पीठे निवेश्य तच्छय्यामनुगैरपनाययेत् ॥ ५१ ॥

क्षालितं शुद्धतोयेन स्नापयेन्मन्त्रवारिभिः ।
शिष्टैः शान्त्युदकैश्चैव स्नापयेत् प्रणवेन तु ॥ ५२ ॥

पाद्याचामाम्बरं भूषामुपवीतं च वेष्टनम् ।
पूर्ववत् सम्प्रदातव्यं दीपान्तं पुनरेव च ॥ ५३ ॥

ब्रह्माणमीश्वरं विप्राननु[1]मान्य यथाविधि ।
अनुज्ञादक्षिणां दत्त्वा कुर्याच्च स्वस्तिवाचनम् ॥ ५४ ॥

शयने रुद्रसूक्तेन पीठाच्चोत्थापनं भवेत् ।
स्थाने पुरुषसूक्तेन ब्राह्मेणासनकर्मणि ॥ ५५ ॥

पुरुषेऽक्षरराजं वा मध्यमं शाङ्करे तथा ।
अन्त्यं ब्राह्मे यथायोगं युक्त्या चोत्थापनं च[2]रेत् ॥ ५६ ॥

शान्तिकुम्भं पुरस्कृत्य धारां चैव कमण्डलोः[3] ।
कर्मार्चामानयेद् विद्वान् वाग्यतोऽन्तः स्मरन् हरिम् ॥ ५७ ॥

तत्त्वज्ञेन धृ[4]तं कुम्भं सम्यगुद्वाहयेत् पुरः ।
शाकुनस्वास्तिसूक्ताभ्यां जयशब्दादिसंयुतम् ॥ ५८ ॥

साग्निं प्रदक्षिणीकृत्य प्रासादं प्रविशेत् पुनः ।
दत्त्वार्घ्यं कौतुकं पीठे स्था[5]पयेद् ब्राह्ममुच्चरन् ॥ ५९ ॥

शिखाशिरोमुखग्रीवाद्विबाहुहृदये तथा ।
नाभावुपस्थ ऊर्वोश्च करयोः पादयोर्न्यसेत् ॥ ६० ॥

---

१. 'नुगम्य', २. 'भवे', ३. 'लोः । दत्त्वा' च. पाठः. ४. 'हृ'; ५. 'प्रा' ख. ग. पाठः.

ऐन्द्रे तु पृष्ठतः कार्यमेवं न्यासविधिः स्मृतः ।
ततस्तु प्रोक्षयेद् विद्वान्[1] तं सम्यग् द्विषडक्षरैः[2] ॥ ६१ ॥
कर्मार्चागतमावाह्य गन्धपुष्पोदकेन तु ।
स्नापयेन्मूलबिम्बं तु ततः शान्त्युदकेन च ॥ ६२ ॥
सर्वान्तैः कास्यहृद्गुह्यपादस्थैः कल्पयेत् तनुम् ।
हृदयादीनि चाङ्गानि यथास्थानं निवेशयेत् ॥ ६३ ॥
पाद्यादि पूर्ववत् कार्यं पुण्याहं वाचयेत् ततः ।
गन्धपुष्पादिभिः सम्यक् पूजयित्वा च भक्तितः ॥ ६४ ॥
पायसं यावकं चौन्नं[3] गौळं वात्र निवेदयेत् ।
तद् भक्ष्यक्षीरसंयुक्तं साज्यं स्वादूपदंशकम् ॥ ६५ ॥
अनुक्तमन्त्रकार्येऽत्र गायत्रीं वैष्णवीं वदेत् ।
तच्छेषेण ततो दद्यात् पार्षदेभ्यो बलिं क्रमात् ॥ ६६ ॥
आचम्याचमनीयं च दत्त्वा[4] चान्नं विसृज्य तत् ।
दक्षिणां च ततो दद्यादन्नाद्यं चानिवारितम् ॥ ६७ ॥
चक्रादीनां तु मन्त्राः स्युः स्वनामपदलक्षिताः ।
यदुक्तं स्थापने कर्म तत् सर्वं कारयेत् ततः ॥ ६८ ॥
स्थापनोक्तविधानेन स्नपनं कारयेत् ततः[5] ।
उत्सवं च तथा यात्रां सप्ताहं भक्तिपूर्वकम्[6] ॥ ६९ ॥
दिनत्रयं तु वा कुर्यादेकाहमथवापदि ।
तथावश्यं तु कर्तव्या शान्त्यर्थं चोत्सवक्रिया ॥ ७० ॥

१. 'न् स', २. 'द्विद्विष', ३. 'वा' च. पाठः. ४. 'त्वान्नं तु विसर्जयेत्' ख. ग., 'त्वान्नं तु वि' क. घ. पाठः. ५. 'पुनः' च. पाठः. ६. 'संयुतः ॥' ख. ग. पाठः.

प्रोक्षणं सद्य एवेष्टं प्रायश्चित्ते विशेषतः ।
स्पर्शश्च विष्णुसूक्तेन सहस्राष्टाक्षरान्वितः ॥ ७१ ॥
शुद्धौ कृतायामिष्टोऽयं विधिः पञ्चाज्यहोमवान् ।
न तिथिर्न च नक्षत्रं न कालस्य प[1]रीक्षणम् ॥ ७२ ॥
प्रायश्चित्तेषु कर्तव्या सद्य एव च निष्कृतिः ।
चतुस्त्रिद्व्येकवेदाः स्युस्तन्त्रज्ञाश्चाधिकारिणः ॥ ७३ ॥
सद्यश्चेदेकवेदोऽपि बहुवेदो विलम्बने ।
आचार्यः सर्वतन्त्रज्ञस्तदा स्याच्चोत्तमो[2] विधिः ॥ ७४ ॥
अधमोऽपि विधिः कार्यः सद्योऽशक्तैरिति स्थितिः ।
पदवाक्यप्रमाणज्ञैर्वेदयज्ञव्रतस्थितैः ॥ ७५ ॥
दक्षैर्जितेन्द्रियैः शान्तैर्मूर्तिपैः सहितो गुरुः ।
एवं कुर्याद् विधानेन जलसम्प्रोक्षणं हरेः ॥ ७६ ॥
आढकत्रयसम्पूर्णमच्छिद्रं कलशं शुभम् ।
सकूर्चं वस्त्रयुग्मेन वेष्टितं रत्नसंयुतम् ॥ ७७ ॥
शालिकूर्चस्थितं पूर्णं पुरुषसूक्तेन पूजयेत् ।
मूलेनाङ्गचतुर्मूर्तिवि[3]भिनार्घ्यादिभिः क्रमात् ॥ ७८ ॥
तत्र विष्णुं महाविष्णुं सदाविष्णुं च विन्यसेत् ।
उल्लेखनादिकं कृत्वा संस्कृत्याग्निं च होमयेत् ॥ ७९ ॥
पौरुषं विष्णुसूक्तं च चित्तिस्रुक्सप्तहोतृकम् ।
चतुर्होता च षड्ढोता पञ्चोपनिषदो जितम् ॥ ८० ॥
सावित्री व्याहृतिश्चैव हंसःशुचिषदित्यपि ।
मूलत्रयं च गायत्रीं जुहुयात् सुसमाहितः ॥ ८१ ॥

१. 'प्रतीक्ष' ख. ग. पाठः. २. 'मे' ग. घ. पाठः. ३. 'धा' क. ख. पाठः. ४. 'म' च. पाठः.

हुत्वा हुत्वा स्पृशेद् बिम्बं कलशं भवनं तथा ।
मूलत्रयेण होमान्ते स्पृशेत् प्रसृ[1]तिमुद्रया ॥ ८२ ॥
सम्पातहुततोयेन कलशस्थेन सर्वतः ।
परिभ्रम्याग्रतो धारां कृत्वा सम्प्रोक्षयेत् कुशैः ॥ ८३ ॥
वास्तुहोमे कृतेऽन्तश्च वास्तोष्पदशपञ्चकैः ।
हुनेदष्टसहस्रं तु पालाशं खादिरं तु वा ॥ ८४ ॥
तथा पञ्चशतं वापि कुर्यादष्टशतं तु वा ।
तावदाज्यं चरुं लाजांस्तिलाञ् शालींश्च होमयेत् ॥ ८५ ॥
प्रत्येकमेवमेवं तु मन्त्रे मन्त्रे च होमयेत ।
यथालाभं[2] तु होतव्यं शास्त्रदृष्टेनै[3] वर्त्मना ॥ ८६ ॥
वैदिकानां हुनेदाज्यं शेषं वै मूलविद्यया ।
एवं कृत्वा विधानेन कौतुकं बन्धयेत् ततः ॥ ८७ ॥
द्वादशाक्षरमन्त्रेण पद्मसूत्रेर्णै[4] चैव हि ।
रात्रौ महोत्सवं कुर्याच्छङ्खतूर्यरवैः शुभैः ॥ ८८ ॥
रात्रौ होमस्तु कर्तव्यो जलसम्प्रोक्षणं दिवा ।
प्रभाते सुमुहूर्ते च प्रोक्षणं कर्तुमारभेत् ॥ ८९ ॥
आवाह्य पूजयेद् देवं शङ्खचक्रादिलक्षणम् ।
साङ्गं[5] द्वादशभिश्चैव दशभिर्मूर्तिभिः सह ॥ ९० ॥
आदित्यरुद्रवस्वाद्यैः किन्नराद्यैश्च संवृतम् ।
वाङ्मयादिं सबिन्दुं च नमस्कारान्तमुत्तमम् ॥ ९१ ॥

---

१. 'त' क. पाठः. २. 'भेन' ख. ग. पाठः. ३. 'न कर्मणा ॥',
४. 'ण वै बहु ॥', ५. 'कं' च. पाठः.

प्रणवादिकमन्त्रेण स्नापयेत सुसमाहितः।[1]
शेषोदकेन मन्त्रज्ञः स्नापयेद् भुवनेश्वरम् ॥ ९२॥
सूक्ताभ्यां पूर्वमुक्ताभ्यां सकलध्यानसंयुतम्।
पीठं गर्भमलिन्दं च कपाटं भित्तिमेव च॥ ९३॥
मण्डपं प्राङ्गणं चैवं सर्वत्र[2] प्रोक्षयेत ततः।
सूक्ताभ्यां मूलमन्त्रैश्च परिवारान् स्वमन्त्रकैः॥ ९४॥
अर्चयेच्च क्रमात सम्यग् गन्धपुष्पादिभिः शुभैः।
दिशाबलिं ततो दद्याच्छङ्खदुन्दुभिनिस्वनैः॥ ९५॥
प्रदक्षिणं ततः कृत्वा प्रणिपत्य क्षमापयेत्।
ब्राह्मणान् भोजयेत् पश्चात तेभ्यो दद्याच्च दक्षिणाम्॥९६॥
स्नपनं चोत्सवं कुर्यादन्नाद्यं च स्वशक्तितः।
आचार्यदक्षिणां दद्यान्मूर्तिपेभ्यश्च पूर्ववत्॥ ९७॥
कपिलां च गुरोर्दद्यात् प्रणिपत्य क्षमापयेत्।
वैष्णवान् पूजयेत सर्वानाशिषो वाचयेच्च तैः॥ ९८॥
एवं कृते विधानेन सर्वसम्पद् भविष्यति॥ ९८½॥

इति विष्णुसंहितायां[3] सप्तविंशः पटलः॥

---

## अथ अष्टाविंशः पटलः।

अथ वक्ष्यामि संक्षेपात् कर्मशेषानहं[4] तव।
यद्योगाज्जायते सर्वं कर्माविकलमुत्तमम्॥ १॥
लेपादिदूषिते बिम्बे शुद्धिं कृत्वा यथोदिताम्।
अभिषेकात् पुरा कार्याः शुद्धयोऽन्याश्च युक्तितः॥ २॥

---

१. 'व प्रोक्षयेत् सुसमाहितः' क. पाठः. २. 'तः' ङ. पाठः.
३. 'यां प्रोक्षणपटलः सप्तविंशः'. ४. 'ननन्तरम।' च. पाठः.

वैष्णवानलनिर्दग्धब्रह्मत्वग्भस्ममिश्रितम् ।
तीर्थतोयं समालोड्य पञ्च[1]पत्ररसं तथा ॥ ३ ॥
गोशृङ्गेणाभिषिच्यार्चां तत्पिष्टैर्लेपयेत् पुनः ।
सहादूर्वासदा[2]भद्रासिद्धार्थरजनीयुतम् ॥ ४ ॥
दोषघ्नं [3]क्षीरिणां त्वग्भिर्घर्षणं[4] लेपनं तथा ।
दूर्वासिद्धार्थकल्केन सगव्येन च लेपनम् ॥ ५ ॥
चन्दनागरुकर्पूरक्षो[5]दैर्धूपैः[6] पुरेण च ।
परितो दीपमाला च कपिलाज्याब्जसूत्रजा ॥ ६ ॥
पिप्पलत्वक्सहालक्ष्मीगन्धनागाब्जकेसरैः ।
क्षीरित्वग्रससम्पिष्टैर्लेपनं पञ्चभिस्तथा ॥ ७ ॥
स्नानप्रकारमालेपं धूपनं च विशेषतः ।
सर्वदोषहरं कुर्यात् स्थानवृद्धिकरं परम् ॥ ८ ॥
पूरणं त्रिविधं प्रोक्तमन्नपुष्पजलैः शुभैः ।
पुष्टिदं जयदं पुण्यमपमृत्युहरं तथा ॥ ९ ॥
सर्वदोषहरं श्रेष्ठं पायसान्नेन पूरणम् ।
कन्दाज्यशर्करापूपकदलीफलसंयुतम् ॥ १० ॥
शुद्ध्यर्थं पुष्टिदं प्रोक्तं प्रायश्चित्तार्थमेव च ।
उत्सवेष्वपि कर्तव्यमात्माभ्युदयकाङ्क्षिभिः ॥ ११ ॥
धान्यतण्डुलवस्त्रस्थान् घटान् पञ्चाम्बुपूरितान् ।
हेमरत्नादिसंयुक्तान् सकूर्चान् पल्लवा[9]ञ्चितान् ॥ १२ ॥

---

१. 'ञ्च', २. 'हा' च. पाठः. ३. 'स्वृक्षाणां त्वग्भिर्घर्षणलेपनम्' ग. पाठः. ४. 'णाले' च. पाठः. ५. 'क्षौद्रैर्धू' क. घ. पाठः. ६. 'पैः', ७. 'संयुक्तैर्लै' ग. पाठः. ८. 'मर्चाभ्यु' ९. 'न्वि' क. घ. पाठः.

कमलादिभिराच्छाद्य कुशपुष्पाद्यलङ्कृतान् ।
वासोभिरहतैश्छन्नान् गन्धपुष्पैश्च पूजितान् ॥ १३ ॥
सकलेन समालभ्य पञ्चभिः स्नापयेत् क्रमात् ।
तथा[1]च गन्धैर्गव्यैश्च पयोदध्याज्यकादिभिः ॥ १४ ॥
सम्पूज्य विधिवद् गन्धैरालिप्याच्छाद्य वाससा ।
सुगन्धिनाहतेनैव सपीठं कवचेन तु ॥ १५ ॥
शुद्धपायसहारिद्रै[3]स्तिलैः शुद्धविनिर्मितैः ।
पेयैर्लेह्यैश्च चोष्यैश्च कन्द[4]मूलफलादिभिः ॥ १६ ॥
सुरसैर्बहुभिर्दिव्यैः सोपदंशैः समन्ततः ।
दधिक्षीरगुलाज्यैश्च कालपक्वैश्च पूरयेत् ॥ १७ ॥
शीतेनान्नेन पूरः स्यादन्नसूक्तादिभिः शुभैः ।
स्थापयेद् घटिकाः सप्त नादयेत् तूर्यनिस्वनैः ॥ १८ ॥
निवेदयेच्चतुर्दिक्षु पायसादि यथाक्रमम् ।
पञ्चभिर्ब्रह्मसूक्तेन समिदाज्यचरून् क्रमात् ॥ १९ ॥
अष्टोत्तरशतं हुत्वा दिक्षु भूतबलिं हरेत् ।
ततोऽनुज्ञाप्य तत् सर्वं विसृज्याप्सु विनिक्षिपेत् ॥ २० ॥
ततश्चाराधयेत् सम्यगन्नाद्यं चोत्सवं पुनः ।
स्नपनं कारयेदेवं सर्वसम्पद् भविष्यति ॥ २१ ॥
वर्णसङ्करविप्रैस्तु स्पृष्टेऽष्टशतमादिशेत् ।
सवर्णगामिभिश्चैवं ब्रह्मघ्नेऽष्टसहस्रकम् ॥ २२ ॥
जलसंप्रोक्षणं चात्र गुरुतल्पगते तथा ।
सुवर्णस्तेयसंसर्गे जलसंप्रोक्षणं तथा ॥ २३ ॥

---

१. 'थैव ग, २. 'द्रैव्यै, ३. 'द्रैः शुद्धैः शु' ख. ग. पाठः.
४. 'न्दापूपफ' घ. ङ. पाठः.

द्विजानां भोजनं चात्र स्नपनं चैव कारयेत ।
सुरापैरपि संस्पृष्टे जलसंप्रोक्षणादिकम ॥ २४ ॥
गोदानं बहुविप्राणामन्नाद्यं स्नपनं तथा ।
ब्रह्महत्यादिसंसृष्टैर्यदि स्पृष्टो जनार्दनः ॥ २५ ॥
जलसंप्रोक्षणस्नानहोमाध्ययनभोजनैः ।
भूहेमकपिलादानपारायणशतं तथा ॥ २६ ॥
एकसंपर्कविप्रेण प्रमादाद् यदि गम्यते ।
गेहं वा देवबिम्बं वा जलसंप्रोक्षणं तथा ॥ २७ ॥
बहुसंपर्कविप्रैस्तु स्पृष्टे बहुगुणं तथा ।
चण्डालश्वपचैः स्पृष्टे प्रासादे बिम्ब एव वा ॥ २८ ॥
अर्चाद्रव्ये[2] च संस्पृष्टे जलसंप्रोक्षणादिकम् ।
पञ्च षट् सप्त वाहानि महास्नानं द्विजार्चनम ॥ २९ ॥
सप्तकारुजनैः स्पृष्टे बिम्बे प्रासाद एव वा ।
जलसंप्रोक्षणैस्नान[3]गोदानान्नाद्यविस्तरः ॥ ३० ॥
चोररूपेण शूद्रैस्तु[4] संस्पृष्टा प्रतिमा यदा ।
जलसंप्रोक्षणान्नाद्यस्नपनैः शुद्धिरिष्यते ॥ ३१ ॥
चोररूपेण वैश्यैस्तु[5] जलसंप्रोक्षणं क्रमात् ।
स्नपनं भोजनं चैव कारयेत् सुसमाहितः ॥ ३२ ॥
मोहादथार्थकामाद् वा चोररूपेण चेन्नृपैः[6] ।
जलसंप्रोक्षणेनैव शुद्धिः स्यान्नात्र संशयः ॥ ३३ ॥

---

१. 'संसर्गे ज' क., 'संयोगे ज' च. पाठः. २. 'र्घ्ये'. ३. 'णं दानं गो' ख. ग. पाठः. ४. 'द्रेण सं' क. ख. ग. च. पाठः. ५. 'श्यश्चे ज्जल' क., 'श्यश्च जल' ङ. च. पाठः. ६. 'वै नृपैः' ख. ग. पाठः.

वर्णोत्तमेन चेत् स्पृष्टश्चोररूपेण केशवः ।
स्नपनं कारयेत् तत्र षोडशैव घटाः स्मृताः ॥ ३४ ॥
अस्नात्वा यदि भक्त्या तु मन्त्रसंस्कारवर्जितम् ।
द्विजोत्तमेन स्पृश्येत पञ्चगव्येन शोधयेत् ॥ ३५ ॥
नृपेण यदि भक्त्या तु स्पृष्टो देवो जनार्दनः ।
यथोक्तैर्नवभिः कुम्भैः स्नपनेनैव शुध्यति ॥ ३६ ॥
वैश्येन यदि संस्पृष्टो भक्त्या मन्त्रविवर्जितम् ।
पञ्चाशत्कलशैरेव स्नपनेन विशुध्यति ॥ ३७ ॥
स्पृष्टः शूद्रेण भक्त्या तु मन्त्रसंस्कारवर्जितम् ।
अष्टोत्तरशतेनैव कर्तव्यं स्नपनं पुनः ॥ ३८ ॥
सप्तकारुजनैश्चापि भक्त्या स्पृष्टे जनार्दने ।
जलसंप्रोक्षणेनात्र स्नपनेन च[2] शुध्यति ॥ ३९ ॥
एतेषां चेत् स्त्रिया स्पृष्टो मोहाद् वा यदि कामतः ।
पूर्वोक्ता निष्कृतिः कार्या शेषं ब्राह्मणपू[3]जनम् ॥ ४० ॥
गोदानं च पुनः कुर्याद् गव्यस्नानं च युक्तितः ।
ब्राह्मण्या चोरमार्गेण स्पृष्टे तु मधुसूदने ॥ ४१ ॥
स्नपनं कारयेच्छ[4]क्त्या ब्राह्मणानां च भोजनम् ।
राजन्यवैश्ययोः स्पर्शे मोहाद् वा चौर्यकेण वा ॥ ४२ ॥
जलसंप्रोक्षणं स्नानं विप्रभोजनसंयुतम् ।
शूद्रा यदि स्पृशेच्चौर्याद् गर्भगेहं तु वा विशेत् ॥ ४३ ॥

---

१. 'ष्टे'. २. 'तु' च. पाठः ३. 'मो' ङ. पाठः. ४. 'द्भ' ख. ग. पाठः. ५. 'दा' च. पाठः

जलसंप्रोक्षणं कुर्यान्महास्नपनसंयुतम् ।
अन्त्यजानां शुनां[1] वापि गर्भे कारुस्त्रियापि वा ॥ ४४ ॥
प्रसूते प्रोक्षणं कुर्याद् द्वादशाहं दशैव वा ।
महास्नानं च कर्तव्यमुत्सवान्नाद्यसंयुतम् ॥ ४५ ॥
वर्णजा यदि सूयेत प्रमादाद् देवमन्दिरे ।
जलसंप्रोक्षणं कृत्वा महास्नानेन शुध्यति ॥ ४६ ॥
क्षत्रिया वाथ वैश्या वा यद्यज्ञानात् प्रसूयते ।
जलसंप्रोक्षणं कुर्यात् त्रिदिनं वा चतुर्दिनम् ॥ ४७ ॥
द्विगुणं सूतशावर्तुसूतिकादाहकैः क्रमात् ।
एवंमार्गेण वै कुर्याज्जलसंप्रोक्षणं बुधः ॥ ४८ ॥
पारायणं चाध्ययनं गोदानं भोजनं तथा ।
बलिभ्रमणवेलायां तत्पात्रं यानमेव वा ॥ ४९ ॥
पतेद् यस्मिन् दिशाभागे तन्मन्त्रेणात्र होमयेत् ।
घृतेन हविषा चैव पालाशाष्टशतेन च ॥ ५० ॥
तथा नित्यबलिस्पर्शे कृते श्वानद्विकादिभिः ।
मूलमन्त्रद्वयेनैव पञ्चोपनिषदा तथा ॥ ५१ ॥
विष्णुसूक्तेन चैवात्र होमं कुर्यात् समाहितः ।
प्रायश्चित्तेषु सर्वेषु जपहोमेषु शस्यते ॥ ५२ ॥
अष्टाक्षरं स्वसंख्यानं[2] द्वादशाक्षरमेव वा ।
पात्रं प्रक्षाल्य तु स्नात्वा कृत्वा न्यासं यथाविधि ॥ ५३ ॥
सम्यगावृत्य[3] तां भूमिं गोमयेनोपलिप्य च ।
पायसं श्रपयेन्मन्त्री घृतमिश्रं सुशोभनम् ॥ ५४ ॥

---

१. 'थ' ख. ग. पाठः. २. 'नां'. ३. 'प्लु' च. पाठः.

* 'द्रिकः स्यात् काककोकयोः' इति मेदिनी ।

व्रीहिभिः स्थण्डिलं कृत्वा तस्मिन् वासाऽथ तण्डुलान् ।
कुशपुष्पाणि विन्यस्य प्रोक्ष्यास्त्रेण समाहितः ॥ ५५ ॥
मूलेन विन्यसेत् पात्रं प्रणवेन स्पृशेत् पुनः[1] ।
ततश्चास्त्रेण संप्रोक्ष्य दक्षिणे शान्तिमर्चयेत् ॥ ५६ ॥
हुत्वान्नं मूलमन्त्रेण प्रणवेनाज्यमेव च ।
अष्टोत्तरशतं वापि सहस्रं वा यथाक्रमम् ॥ ५७ ॥
हविःशेषं ततः पश्चाद् बलिपात्रे विनिक्षिपेत् ।
तत् कृत्वा लिङ्गवत् प्रोक्ष्य मूलेनावाह्य पूर्ववत् ॥ ५८ ॥
कर्मार्चां शोधयित्वा वा तस्यामावाह्य पूजयेत् ।
पाद्यार्घ्याचमनं दत्त्वा गन्धपुष्पैरथार्चयेत् ॥ ५९ ॥
नमस्कृत्य ततः स्तुत्वा[2] सोत्तरीयः समाहितः ।
उद्धृत्य व्याहृतीर्जप्त्वा मूर्ध्नि तारेण विन्यसेत् ॥ ६० ॥
शङ्खतूर्यादिसंयुक्तः शनैर्गत्वा प्रदक्षिणम् ।
अन्तः[3] प्रविश्य तत् पात्रमैशान्यां स्थापयेद् बुधः ॥ ६१ ॥
उद्वास्य क्षालितं त्यक्त्वा पात्रमन्यत् समाहरेत्[4] ।
अनुयागे[5] नवं बिम्बं शोधयित्वाधिवासयेत् ॥ ६२ ॥
वैष्णवाग्नौ तु जुहुयात् प्रायश्चित्तं विशेषतः ।
पञ्चोपनिषदैर्मन्त्रैराचार्यः सुसमाहितः ॥ ६३ ॥
पूर्णाहुतिं ततो दद्याद् द्वादशाक्षरविद्यया ।
अष्टाक्षरेण जुहुयात् समिदाज्यचरून् क्रमात् ॥ ६४ ॥
सहस्रं वा शतं वापि पञ्चविंशतिमेव वा ।
लोहकुम्भं तु संगृह्य सुदृढं सूत्रवेष्टितम् ॥ ६५ ॥

---

१. 'ततः ॥ पुनश्चा' ख. ग. पाठः. २. 'तिं ज' घ. ङ. च. पाठः. ३. 'ततः प्र' ख. ग. पाठः. ४. 'च' घ. ङ. च. पाठः. ५. 'ने' च. पाठः.

पूरयित्वा तु विधिना सरत्नं हेमसंयुतम् ।
बीजैः सर्वैः समायुक्तं स्थापयेत् तत्र सुस्थितम् ॥ ६६ ॥
तत्रावाह्य हरिं पश्चात् पूजयेच्च विधानतः ।
पूर्वोक्तेनैव[1] मार्गेण शेषं कर्म समाचरेत् ॥ ६७ ॥
स्नपनं चोत्सवं कुर्याद् विधिदृष्टेन कर्मणा ।
संवत्सरं नरो भक्त्या[2] समभ्यर्च्य जनार्दनम् ॥ ६८ ॥
यत् फलं समवाप्नोति पवित्रारोहणेन तत् ।
न करोति विधानेन पवित्रारोहणं तु यः ॥ ६९ ॥
तस्य सांवत्सरी पूजा निष्फला कथिता बुधैः ।
तस्मात् कर्तव्यमब्देऽब्दे पवित्रारोहणं हरेः ॥ ७० ॥
श्रावणस्य सिते पक्षे द्वादश्यां तु यथाविधि ।
सिंहस्थे वा रवौ कार्यं कन्यायां तु स्थितेऽथवा ॥ ७१ ॥
कन्यया कर्तितं सूत्रं कार्पासं पद्मजं[3] तु वा ।
क्षौमसूत्रं तु वा कुर्यादलाभे दर्भसम्भवम् ॥ ७२ ॥
नोपयुक्तं क्रियायां स्यादन्यभक्तादिदूषितम् ।
त्रिगुणेन तु कर्तव्यं हीनमध्योत्तमं त्रिधा ॥ ७३ ॥
तत् सप्तविंशकं कुर्याच्चतुष्पञ्चाशकं तथा ।
अष्टोत्तरशतं वा स्याद् वनमाला सहस्रिका ॥ ७४ ॥
फलं च मानुषं दिव्यं सालोक्यं मुक्तिरेव च ।
नाभ्यूरुजानुमात्रं स्यात् परं बिम्बप्रमाणतः ॥ ७५ ॥
ग्रन्थयो द्वादश प्रोक्ता द्विगुणास्त्रिगुणास्तथा ।
कर्तव्यं[4] वनमालायां शतमष्टोत्तरं सदा[5] ॥ ७६ ॥

१. 'न च मा'. २. 'क्तः' च. पाठः. ३. 'पाङ्कजं' क. ख. ग. पाठः. ४. 'व्या' च. पाठः. ५. 'तु वा ॥' क. पाठः.

अधिवासनसूत्रे तु ग्रन्थयो द्वादशैव तु ।
मन्त्रो द्विजेष्विदंविष्णुरन्येषु द्वादशाक्षरम् ॥ ७७ ॥
तावदावर्तयेन्मन्त्रं यावन्तो ग्रन्थयः कृताः ।
एकधा च द्विधा चैव[1] त्रिधा चापि पवित्रके ॥ ७८ ॥
कुङ्कुमोशीरकर्पूरचन्दनादिविलेपनैः ।
ग्रन्थिमध्ये विलिप्याथ तत्त्वन्यासं तु योजयेत् ॥ ७९ ॥
अधिवास्य पवित्राणि चैकादश्यामुपोषितः ।
गन्धपुष्पैः समभ्यर्च्य न्यसेद् देवाग्रतो निशि ॥ ८० ॥
तत्त्वज्ञानपरैः कार्यं पवित्रारोहणं हरेः ।
एकादश्यां तदभ्यर्च्य मूलमन्त्रेण भक्तिमान् ॥ ८१ ॥
भूषादामनिवेद्यैश्च संपूज्य गरुडध्वजम् ।
नृत्तगीतादिसंयुक्तं जागरं तत्र कारयेत् ॥ ८२ ॥
सोपवासः शुचिर्भूत्वा कृतजप्यो जितेन्द्रियः ।
दद्याद् दानं द्विजाग्र्येभ्यो भक्त्याभ्यर्च्य हरिं स्मरन् ॥ ८३ ॥
तत्राधिवासितं प्रातस्तदादाय पवित्रकम् ।
अतोदेवेति सूक्तेन विष्णोर्मूर्ध्नि निवेशयेत् ॥ ८४ ॥
शूद्रस्तु मूलमन्त्रेण येन वा पूजयेद्धरिम् ।
वेदघोषैर्जयस्तोत्रगीतमङ्गलनिस्वनैः ॥ ८५ ॥
पवित्रारोहणं कुर्याद् देवं विज्ञापयेत् ततः ।
मणिविद्रुममालाभिर्मन्दारकुसुमादिभिः ॥ ८६ ॥
इयं सांवत्सरी[2] पूजा[3] तवास्तु गरुडध्वज ! ।
मन्त्रहीनं क्रियाहीनं भक्तिहीनं जनार्दन ! ॥ ८७ ॥

१. 'चाथ त्रि', २. 'सं'. ३. 'रं' च. पाठ..

यत् पूजितं मया देव! परिपूर्णं तदस्तु ते ।
वनमालां यथा देव! कौस्तुभं सततं हृदि ॥ ८८ ॥
तद्वत् पवित्रतन्तूंश्च पूजां चेमां हृदा वह ।
इति विज्ञाप्य देवेशं भक्त्यानम्य क्षमापयेत् ॥ ८९ ॥
ततश्च दद्याद् विप्रेभ्यो हरिमुद्दिश्य दक्षिणाम् ।
ततोऽनुपूजयेद् भक्त्या गुरुमन्यांश्च भक्तितः ॥ ९० ॥
मूलमन्त्रेण जुहुयाद् वह्नौ सघृतयावकम्[1] ।
ततश्च पूजयेद् भक्त्या विप्रान् दद्याच्च दक्षिणाम् ॥
सर्वांश्चैवार्थिनः शक्त्या पूजयेदोदनादिभिः ।
यावत्तत्त्वयुता पूजा तावत्योऽङ्गुल्योऽत्र वा ॥ ९२ ॥
यावन्तो ग्रन्थयश्चोक्तास्तत्त्वैस्तैरनुमन्त्रयेत् ।
सांवत्सरीं शुभां पूजां संपाद्य विधिवन्मम ॥ ९३ ॥
त्वं पवित्र! व्रजेदानीं विष्णुलोकं विसर्जितः ।
इत्युद्वास्य द्विजे दद्यात् तोये वा तद् विसर्जयेत् ॥ ९४ ॥

इति विष्णुसंहितायाम्[2] अष्टाविंशः पटलः ॥

## अथैकोनत्रिंशः पटलः ।

अथ वक्ष्यामि संक्षेपात् समयाचारलक्षणम् ।
दीक्षितानां तु सर्वेषां यद्योगात् सर्वसिद्धयः ॥ १ ॥
ब्राह्मणाद्याश्चतुर्वर्णास्त्रयस्[3]त्वेषां च दीक्षिताः ।
भक्ता जितेन्द्रियाः शान्ताः सर्वे समयिनः स्मृताः ॥ २ ॥
समयी दीक्षितः पश्चाच्चक्रवर्त्यभिषेकवान् ।
गुरुश्चैव तथाचार्यो भगवान् सप्तमः स्मृतः ॥ ३ ॥

---

१. 'पायसम्' ख. ग. पाठः. २. 'यां कर्मशेषपवित्रारोहणपटलोऽष्टाविंशोऽध्यायः ॥' च. पाठः. ३. 'स्ते' ख. ग. च. पाठः.

यागः स्तोमो महायागश्चाध्वरोऽथ सवः क्रतुः ।
हरिस्तोम इति ज्ञेयाः सप्त यागाः समासतः ॥ ४ ॥
वसन्ते च तथा ग्रीष्मे शरद्वर्षासु च क्रमात् ।
वर्णिनां विहिता दीक्षा सर्वेषां चोत्तरायणे ॥ ५ ॥
सकृद द्विस्त्रिश्चतुर्दीक्षा सप्तकृत्वश्च वर्णिनाम् ।
तथा द्वादशकृत्वश्च कार्या वा प्रतिवत्सरम् ॥ ६ ॥
पुष्पपातवशान्नाम पूर्वमेव तु गृह्यते ।
तच्छर्मवर्मगुप्तान्तं दासान्तं चेह वर्णिनाम् ॥ ७ ॥
केवलं समयीत्यादि द्रष्टव्यं केशवादिवत् ।
स्त्रीणां तु केशवाद्याख्या देव्यन्तास्त्रिषु कीर्तिताः ॥ ८ ॥
शूद्राणां दासदास्यन्ताः सर्वेषां यागभेदतः ।
सर्वेऽपि दीक्षिताः सम्यक् सदा गुरुपरायणाः ॥ ९ ॥
वर्णाश्रमगतान् धर्मान् रक्षेयुः समयांस्तथा ।
गुरुदेवद्विजाग्नीनां सर्वदा परिचर्यया ॥ १० ॥
व्रतोपवासनियमैर्भक्त्या चेच्छेयुरुन्नतिम् ।
नानिष्ट्वा देवमश्नीयान्नचादीक्षितवेश्मनि ॥ ११ ॥
निर्माल्यं न स्पृशेद् दद्याल्लङ्घयेद् वाशनं कुतः ।
सर्वेषामेव देवानां निर्माल्यमशुचि स्मृतम् ॥ १२ ॥
विष्णुर्भुक्तं तु पुष्पादि शुचीत्याददते परे ।
कांस्यपात्रे न भोक्तव्यं न वन्द्या चान्यदेवता ॥ १३ ॥

१. 'कथिता', २. 'चापि व' ख. ग. पाठः. ३. 'च ।' घ. ङ. च. पाठः. ४. 'वै' च. पाठः. ५. 'ती' ख. ग. पाठः. ६. 'वरिवस्यया' ख. ग. ङ. च. पाठः. ७. 'मपि दे' क. पाठः. ८. 'भ' च. पाठः. ९. 'न्द्याश्चान्यदेवताः ॥' ङ. पाठः.

अदीक्षिताद्ययोग्येषु सिद्धान्तं न प्रकाशयेत् ।
नोदक्यथाभिभाषेत न चण्डालैर्नचान्त्यजैः ॥ १४ ॥
न कुदेशे वसेन्नित्यं न च पाषण्डिभिः सह ।
तिर्यक् पुण्ड्रं न कुर्वीत नो छिट्कारं न सङ्करम् ॥ १५ ॥
शार्ङ्गोष्ठं लशुनं शिग्रु धान्याम्लं चाविकं पयः ।
पिण्याकं कोरदूषं च छत्राकं वर्जयेत् सदा ॥ १६ ॥
आसनं शयनं यानं नातिष्ठेच्चक्ररूपकम् ।
प्रतिमासन्निधौ नान्यप्रतिमास्तुतिमाचरेत् ॥ १७ ॥
शृणुयान्न परीवादं नच कालं वृथा नयेत् ।
चक्राङ्को विष्णुनामाङ्कपुत्रभृत्यपशुर्भवेत् ॥ १८ ॥
तत्रैव तु शिरः कृत्वा स्वपेद् यत्र रविर्गतः ।
नाग्निगोगुरुविप्रार्चाधान्येष्वङ्घ्री प्रसारयेत् ॥ १९ ॥
मत्स्यकूर्मवराहाणां नच मांसानि भक्षयेत् ।
विप्राग्निवैष्णवाश्वत्थान् गाश्च कुर्यात् प्रदक्षिणम् ॥ २० ॥
विष्णोर्गृहाणि सर्वाणि दृष्ट्वा भक्त्याभिवादयेत् ।
न बाहुभ्यां तरेत् सिन्धुं न गवा नान्यवाससा ॥ २१ ॥
न नग्नो वा विशेत् तोयं न धावेद् वर्षसंभवे ।
ऊर्ध्वपुण्ड्रास्तु ये मर्त्यास्तान् सर्वाञ्छक्तितोऽर्चयेत् ॥ २२ ॥
अग्रभिक्षां सदा दद्याद् ग्रासमुष्टिं गवां तथा ।
नाद्यात् पर्युषितं चान्नं नागतं परगेहतः ॥ २३ ॥
शिरस्स्पृष्टेन तैलेन नाङ्गं किञ्चिदुपस्पृशेत् ।
नानन्तर्धाय चासीत नान्यभक्तं प्रपूजयेत् ॥ २४ ॥

---

१. 'षणुरूपाणि' घ. ङ. च. पाठः.

प्रत्यक्षलवणं नाद्यान्निर्यासामेध्यजानि, वा ।
वैष्णवैर्दीक्षितैर्विप्रैर्विवादं न समाचरेत् ॥ २५ ॥
अन्त्यजं वा श्वपाकं वा नावमन्येत वैष्णवम् ।
विष्ण्वर्थान्येव कर्माणि सर्वाणि मनसा स्मरेत् ॥ २६ ॥
अपि प्राणपरित्यागं कुर्याद् विष्णुनिमित्ततः ।
कृतेन कर्मणा येन भगवान् भुवनेश्वरः ॥ २७ ॥
प्रसीदति हि तत् कार्यं कर्मेदं वैष्णवैः सदा ।
सत्पथे मनसि न्यस्ते वाणी तिष्ठति सत्पथे ॥ २८ ॥
इन्द्रियाणि च सर्वाणि तस्मात् तच्छिक्ष्यमादितः ।
उपकारः परो धर्मः सर्वेषामिति निश्चयः ॥ २९ ॥
तस्मात् सर्वप्रयत्नेन सर्वेषां हितमाचरेत् ।
दानानि कीर्तिभूयांसि मध्यमानि फलेष्वतः ॥ ३० ॥
रहस्यदानं कर्तव्यं पात्रकालादियोगतः ।
पात्रे सर्वाणि देयानि दातव्यानि मनस्विना ॥ ३१ ॥
देवमेव समुद्दिश्य यशस्तत्रानुषङ्गिकम् ।
जितेन्द्रियस्य भक्तस्य मानसो धर्म उत्तमः ॥ ३२ ॥
कायिकः प्राकृतस्योक्तो मध्यमस्य तु वाचिकः ।
क्रियारूपः स्मृतो धर्मो ज्ञानरूपं तु तत्परम् ॥ ३३ ॥
ज्ञानेन मोक्षमाप्नोति ज्ञानार्था चेष्यते क्रिया ।
केवलं त्विह विज्ञानं धर्मस्यानुग्रहाद्दते ॥ ३४ ॥
नालं चेतो भवाविष्टं प्रसादयितुमञ्जसा ।
तदिष्टानन्तरायार्थं प्राप्य ज्ञानमनुग्रहात् ॥ ३५ ॥

१. 'च' ख. ग. पाठः. २. 'पस्तु तत्परः' ङ., 'पं ततः परम्' ख. ग. पाठः.

ततः साध्यो भवेन्मोक्षस्तद्भक्तैरेव नापरैः ।
प्रासादे स्थापितं देवं सर्वदा न प्रकाशयेत् ॥ ३६ ॥
अन्यत्रार्चनवेलायां पूजनान्ते प्रकाशयेत् ।
अशुचिद्र[1]व्यसंसर्गं जनसम्मर्दमेव च ॥ ३७ ॥
प्रासादे वर्जयेन्नित्यं लोकोपकरणानि च ।
वैदिका वैष्णवा मन्त्राः शान्तिकाः पौष्टिकास्तथा ॥ ३८ ॥
यथायोगं प्रयोक्तव्यास्तन्त्रमन्त्रास्तदन्तरे ।
ऋक्षु ये पावना मन्त्रा यजुष्ष्वपि च सामसु ॥ ३९ ॥
अथर्वणेषु चादेया देवपूजादिकर्मसु ।
ये मन्त्राः परमं देवं साक्षाल्लक्षेण वा[2]श्रिताः ॥ ४० ॥
साङ्गाः पृथगुपादेयास्तान् विचार्यात्र योजयेत् ।
नहि तेभ्यः परं किञ्चिद् वाङ्मयं भुवि विद्यते ॥ ४१ ॥
कामदं च पवित्रं च ये मन्त्रा वैदिकाः स्मृताः ।
तैरेव कृतसस्कारे वंशे जातः स्वयं पुनः ॥ ४२ ॥
तानुपेक्ष्यापरान् मन्त्रान् नानुवर्तितुमर्हति ।
कर्मकाण्डप्रधानास्तु वैदिका विधयः स्थिताः ॥ ४३ ॥
कामकामैर्नियोक्तव्यास्तां तामाश्रित्य देवताम् ।
मन्त्रास्ते वैदिकाः सिद्धाः संभूय पृथगेव वा ॥ ४४ ॥
कर्मसिद्धौ प्रवर्तन्ते प्रायो नानाफलाश्रयाः ।
तेऽन्वीक्ष्यान्वीक्ष्य संग्राह्या वैष्णवैर्वेदवादिभिः ॥ ४५ ॥
तत्पूजायामिदं तन्त्रं भवत्येव निबन्धनम् ।
तज्ज्ञात्वा वैदिकान् मन्त्रानन्यानुद्धृत्य च स्वयम् ॥४६॥

---

१. 'द्रं' च. पाठः. २. 'चा' ख. ग. पाठः.

इदं च तन्त्रमालम्ब्य पूजयेत् पुरुषोत्तमम् ।
यो जपस्तुत्युपस्थानं तैः कृत्वानुस्मरद् हरिम् ॥ ४७ ॥
पठेन्मन्त्रान् यथान्यायं स मुख्यो विष्णुयाजकः ।
जपयज्ञं विशेषेण ये तु कुर्वन्ति वैदिकैः ॥ ४८ ॥
काले पूजां च कुर्वन्ति तेषु संप्रीयते हरिः ।
ध्यात्वार्कमण्डले विष्णुं वेदमन्त्रैरभिष्टुतम् ॥ ४९ ॥
धार्यमाणे तथैवाग्नौ जुहुयात् कार्यसिद्धये ।
तत्र यत् केवलं ध्यानं वेदान्तोक्तमनाश्रयम् ॥ ५० ॥
न तत्रेन्द्रियदौर्बल्यात् कर्मस्थस्याधिकारिता ।
यथा गिरितटाग्रस्थवनस्पतिफलेच्छया ॥ ५१ ॥
उपाये वर्ततेऽश्रान्तस्तथासौ यत्नमाचरेत् ।
सर्वत्र क्रमवान् यत्नः कार्यो नेच्छैव केवला ॥ ५२ ॥
तत् कायवाङ्मनोयोगैः क्रमादिच्छेत् परां[2] गतिम् ।
निराकारे तु या भक्त्या पूजेष्टा ध्यानमेव वा ॥ ५३ ॥
रमणीयमिवाभाति तदनर्थस्य कारणम् ।
स्थूलभावप्रसङ्गीनि[3] जन्मनास्येन्द्रियाणि हि[4] ॥ ५४ ॥
सूक्ष्मार्थं न प्रपद्यन्ते चिराच्च किमुताचिरात् ।
नच रूपं विना देवो ध्यातुं केनापि शक्यते ॥ ५५ ॥
सर्वरूपनिवृत्ता हि बुद्धिः कुत्रास्य तिष्ठति ।
निवृत्ता ग्लायते बुद्धिर्निद्रया वा परीयते ॥ ५६ ॥
तस्माद् विद्वानुपासीत बुद्ध्या साकारमेव तम् ।
अस्ति तस्य परोक्षं तदिति किञ्चिदनुस्मरेत् ॥ ५७ ॥

१. 'योगं स' ख. ग. पाठः. २. 'गतिं पराम् ।', ३. 'ङ्गा' क. पाठः. ४. 'तु', ५. 'व' ख. ग. पाठः.

सर्वथाकारमुद्दिष्टं न परित्यज्य पण्डितः ।
परं देवमुपासीत मुक्तये वा फलाय वा ॥ ५८ ॥
मन्त्रैरावर्त्यमानैस्तु विष्णुपादसमाश्रयैः ।
स्वरूपं लक्ष्यते बुद्धौ तत्प्रसादेन नान्यथा ॥ ५९ ॥
भक्त्यर्थाः सर्वमन्त्राः स्युः स्तोत्राणि ध्यानमर्चनम् ।
सा यस्य हृदये तीव्रा स भक्तो नान्य इष्यते ॥ ६० ॥
प्रियाणि देवदत्तानि कर्मजान्यप्रियाणि च ।
यैः पश्येत् सततं बुद्ध्या स भक्तो नेतरो जनः ॥ ६१ ॥
तस्य योगमयं विद्यादाकारं सार्ववस्तुकम् ।
नित्यं भक्तानुकम्पार्थं ध्येयो मन्त्रमयस्तु सः ॥ ६२ ॥
यदा निवृत्तकर्मासौ निर्वाणे रमते बुधः ।
तदा सूक्ष्मशरीरं तं पूजयेत् पुरुषोत्तमम् ॥ ६३ ॥
शक्तयोऽस्यायुधाकारा विज्ञेया बाहवो दिशः ।
द्यौर्मूर्धा पृथिवी पादौ दृष्टिरर्को मनः शशी ॥ ६४ ॥
अच्छेद्योऽयमदाह्योऽयमक्लेद्योऽशोष्य एव च ।
नित्यः सर्वगतः स्थाणुः पूज्यो नित्यं मनीषिभिः ॥ ६५ ॥
यदा यदा प्रसन्ना धीर्ध्यायेत् सूक्ष्मं तदा तदा ।
सीदन्ति संशयेनैव यतयोऽप्यत्र विक्लबाः ॥ ६६ ॥
आगमार्थं दृढं कुर्यात् सर्वविद्याभिरात्मवान् ।
विवेकेन च शुद्धेन नागमस्यैव संप्लवम् ॥ ६७ ॥
स्वगृह्ये धर्मशास्त्रे च यदुक्तं तत् सदाचरेत् ।
तन्त्रोक्तमविरुद्धं च[3] कुलवर्णाश्रमानुगम् ॥ ६८ ॥

---

१. 'पश्येत स' च. पाठः. २. 'मा' ख. ग. च. पाठः. ३. 'यत क्' ख. ग. पाठः.

स्त्रीशूद्राणां तु सर्वेषां नौपनायनिकक्रिया ।
दीक्षोपनयनं तेषां तान्त्रिकश्च मनाग्विधिः ॥ ६९ ॥
तान्त्रिकास्तन्त्रमन्त्राः स्युर्विधयश्च तदाश्रयाः ।
मूलमन्त्रैश्च गायत्र्या वैदिकैश्च त्रिधा क्रिया ॥ ७० ॥
विट्छूद्रयोर्नृपे विप्रे सर्वं वा विप्र इष्यते ।
होमादिषु स्वमन्त्राः स्युरनुलोमास्तु वा सदा ॥ ७१ ॥
चतुर्वर्णोद्भवाः सर्वे प्रतिलोमानुलोमजाः ।
तत्रानुलोमजाः श्रेष्ठा वर्ज्यास्तु प्रतिलोमजाः ॥ ७२ ॥
प्रतिलोमेषु सर्वेषु सूत एकस्तु गृह्यते ।
नार्हन्त्येवेतरे दीक्षां वर्णाश्रमबहिष्कृताः ॥ ७३ ॥
ब्रह्मचारी गृहस्थश्च वानप्रस्थो यतिस्तथा ।
चतुर्धाश्रमिणो भिन्नाः पुनश्चाचारभेदतः ॥ ७४ ॥
तत्राद्यो ब्रह्मचारी च लिङ्गी शिष्य उपासकः ।
अक्षारलवणाशी यो भैक्षाहारो मिताशनः ॥ ७५ ॥
स्थण्डिलाजिनशायी च ब्रह्मचारी स उच्यते ।
एवं कर्माणि यः कुर्याच्चक्रादिकृतलक्षणः ॥ ७६ ॥
देवताराधने सक्तः स लिङ्गीति प्रकीर्तितः ।
भैक्षमात्रेण जीवन् यः पठेच्छुश्रूषुरर्चकः ॥ ७७ ॥
नान्यकार्यपरो नित्यं स शिष्यः परिकीर्तितः ।
त्रिसन्ध्यं पूजयेन्[1] देवं नान्यकार्यपरश्च यः ॥ ७८ ॥
त्रिः स्नात्वानुचरेन्नित्यं गुरुं स स्यादुपासकः ।
व्रती गृहस्थ एवाढ्य आचार्यो गृहिणस्त्विमे[2] ॥ ७९ ॥

१. 'यन्' क. ख. च. पाठः. २. 'येद्दे' क. पाठः.

चत्वार इह सम्प्रोक्तास्तथैवाचारभेदतः ।
व्रतोपवासी नक्ताशी नियतार्चो जितेन्द्रियः ॥ ८० ॥
ऋतुगामी मिताहारो व्रती मूलपरः सदा ।
यज्ञाध्ययनदेवार्चाशिष्यादिभरणोद्यतः ॥ ८१ ॥
गृहस्थ इति विज्ञेयः स्वदारव्रतिको नरः ।
सर्वातिथ्यपरो नित्यं कामभोजी सुखान्वितः ॥ ८२ ॥
देवोत्सवपरो भक्तः पर्वयाज्याढ्य उच्यते ।
याजनाध्यापने युक्तो याग[1] वैदिकतान्त्रिके ॥ ८३ ॥
नित्ययाजी जितक्रोध आचार्योऽनुग्रहोन्मुखः ।
तथा वैखानसस्तन्त्री गुरुर्निष्कल एव च ॥ ८४ ॥
वानप्रस्थश्चतुर्धैव तन्त्रेऽस्मिन् परिकीर्तितः ।
अक्षारलवणाशी यो व्याख्याता पुत्रदारवान् ॥ ८५ ॥
स्थण्डिलाजिनशायी च ध्यायन् वैखानसः सदा ।
वन्यवृत्तिस्त्रिसन्ध्यार्ची जपहोमपरायणः ॥ ८६ ॥
वल्कलाजिनवांस्तन्त्री दर्भशायी जपन् सदा ।
त्रिःस्नायी नियतावासश्चीरी मूलफलाशनः ॥ ८७ ॥
तीर्थस्नातोऽर्चयन् ध्यायन् द्विषट्कजपवान् गुरुः ।
यदृच्छालाभसन्तुष्टो नक्तभोजी दृढव्रतः ॥ ८८ ॥
चीरी विमत्सरो मौनी निष्कलोऽह्नस्त्रिरर्चयेन्[2][3] ।
हंसः परमहंसश्च भगवान् प्रभुरित्यपि ॥ ८९ ॥
चतुर्विधः समाख्यातस्तन्त्रेऽस्मिन् दीक्षितो यतिः ।
शङ्खचक्रधरो नित्यमेकदण्ड्येकभैक्षभुक् ॥ ९० ॥

१. 'यो' च. पाठः. २. 'ह्नि त्रिर' क. पाठः. ३. 'येत्' च. पाठः.

सदार्ची कर्मविद् ध्यानी हंसो जपपरः सदा ।
अद्वैतनिरतो दण्डी ज्ञानध्यानपरायणः ॥ ९१ ॥
शान्तोऽशिखोपवीतश्च भैक्षाहारो व्रतेस्थितः ।
यतिः परमहंसः स्यात् तन्त्रकर्माणि निष्ठितः ॥ ९२ ॥
शङ्खचक्रबृसीशिक्यकमण्डलुपवित्रवान् ।
त्रिदण्डी पात्रवान् भिक्षुर्भगवान् योगपट्टभृत् ॥ ९३ ॥
एतान्येव वहन् नित्यं छत्रं प्रतिकृतिं तथा ।
चक्रयागेन देवेशमर्चयन् नियतात्मवान् ॥ ९४ ॥
त्रिसन्ध्याराधने युक्तः सत्त्वस्थो जपवान् प्रभुः ।
विषुवायनयोर्जन्मद्वादशीश्रवणेषु च ॥ ९५ ॥
अष्टम्यां च नवम्यां च पञ्चम्यां न स्त्रियं व्रजेत् ।
मूलेन परिषिच्यान्नं स्पृष्ट्वा पीत्वा जलं तथा ॥ ९६ ॥
ध्यात्वान्तः पुरुषं मौनी दीप्तवैश्वानरं तथा ।
प्रणवेनाहुतीः पञ्च कुर्यात् पञ्चात्मने ततः ॥ ९७ ॥
वक्त्रमात्रं ग्रसेत् पिण्डं न हसेन्नोद्विजेत वा ।
त्यजेत् सर्वत्र चापल्यं भोक्तव्यं शब्दवर्जितम् ॥ ९८ ॥
श्वोदक्यान्त्यजपाषण्डिकाकदेवलकुक्कुटान् ।
कारुकान् वा सदा पश्यन् स्नायात् त्यक्त्वान्नमञ्जसा ॥
पञ्चोपनिषदो जप्त्वा प्रोक्षयेत् प्रणवेन च ।
विष्णुश्चाथ महाविष्णुः सदाविष्णुरिमे त्रयः ॥ १०० ॥
सवनेषु क्रमात् पूज्या जपध्यानादिभिः सदा ।
प्रातस्तु विष्णुगायत्री मध्याह्ने द्वादशाक्षरम् ॥ १०१ ॥

---

१. 'याजी हं', २. 'ते' ख. ग. पाठः. ३. 'सं' च. पाठः. ४. 'न्त' ङ. पाठः. ५. 'जन् स' ख. ङ. पाठः. ६. 'श्येत् स्ना' च. पाठः.

सायमष्टाक्षरं नित्यं मूलं वा सर्वदा जपेत् ।
उत्थायात्तु गुरुं[1] स्नात्वा ध्यात्वा देवं प्रपूजयेत् ॥ १०२ ॥
निर्गच्छेत् सव्यपादेन प्रविशेच्चालयं पुनः ।
गुरोरनुज्ञया भैक्षं चरेत् पात्रेण शं वदेन्[2] ॥ १०३ ॥
गुरवे दर्शयित्वा तु विन्यसेत् तदनुज्ञया ।
आचम्य मूलमन्त्रेण हुत्वाग्नौ समिधः शुचिः ॥ १०४ ॥
आसने सुखमासीनः पादौ विन्यस्य भूतले ।
पात्रं च वामहस्तेन स्पृशन् प्राणाहुतीश्चरेत् ॥ १०५ ॥
यद्युच्छिष्टदनाचान्तो[3] भुक्तवानासनाद् द्विजः ।
स्नानं सद्यस्तु कर्तव्यं तस्मात् तत्रैव चाचमेत् ॥ १०६ ॥
सन्ध्यामुपास्य भूयोऽपि हुत्वा च समिधस्तथा ।
अर्चयित्वा हरिं भिक्षां चरेत् पूर्ववदेव च ॥ १०७ ॥
एवं प्रातश्च सायं च गुरोर्वचनमास्थितः ।
गुरोरनुज्ञया पश्चाद् गृहस्थाश्रममाश्रितः ॥ १०८ ॥
स्नात्वा तमर्चयेन्नित्यं ततः कर्माणि चाचरेत् ॥ १०८½ ॥

इति विष्णुसंहितायामेकोनत्रिंशः[4] पटलः ॥

---

## अथ त्रिंशः पटलः ।

अथ वक्ष्यामि संक्षेपाद् योगं भागवतं परम् ।
यदन्यैरश्रुतं पूर्वं हितानां परमं हितम् ॥ १ ॥
युक्ताहारविहारस्तु युक्तचेष्टः समाहितः ।
योगं भागवतं नित्यमभ्यसेन्नियतात्मवान् ॥ २ ॥

---

१. 'रु' क. पाठः. २. 'देत् ॥' ख. ग. घ. ङ. पाठः. ३. 'उ' ख. ग. पाठः. ४. 'यां समयाचारलक्षणपटल एकोनत्रिंशः' च. पाठः

पञ्चकालविभागज्ञो मितभाषी मिताशनः ।
कामक्रोधादिजिद् भक्तः समलोष्टाश्मकाञ्चनः ॥ ३ ॥
समयाचारसंयुक्तो जपध्यानपरायणः ।
एकान्ते विजने स्थाने निवाते शब्दवर्जिते ॥ ४ ॥
बद्ध्वा योगासनं मौनी योगं युञ्जीत योगवित् ।
पूजयित्वा हरिं पूजां तत्रैव प्रतिपादयेत् ॥ ५ ॥
किङ्करत्वेन चात्मानं कृताञ्जलिरधोमुखः ।
न याचेत फलं किञ्चित् प्रसन्नो दास्यति स्वयम् ॥
जानात्येव हि कालं स भक्तिपूजागुणाशुणान् ।
प्रसन्नस्त्वनुगृह्णीयात त्वरया न कदाचन ॥ ७ ॥
नत्वेव नानुगृह्णीयाज्जन्मान्तरशतेष्वपि ।
कर्मणां [1]पच्यमानानामपरेषां परिक्षये ॥ ८ ॥
प्रकाशयति भक्तानां हरिः कुर्वन्ननुग्रहम् ।
ततस्तु संपदेवास्य पुरस्तादुपलक्ष्यते ॥ ९ ॥
क्षीयन्तेऽस्यारयो नित्यं वर्धन्ते संपदः स्वयम् ।
[2]फलं त्वयत्नाद् भूयः स्यान्नश्यन्ति व्याधयः स्वयम् ॥
न कश्चिच्चास्य संक्लेशो वर्धन्ते पशवः प्रजाः ।
दीर्घं चास्य भवेदायुर्जायन्ते सुभगाः प्रजाः ॥ ११ ॥
प्रशंसन्ति जनाश्चैनं चोरयेयुर्न दस्यवः ।
अनुपद्रवमैश्वर्यं चिरं तिष्ठत्ययन्त्रितम् ॥ १२ ॥
धर्माद्यभिमुखी धीः स्याद‍धर्मादिपराङ्मुखी ।
सुखेनैवापरान्तश्च पुण्यकाले भविष्यति ॥ १३ ॥

१. 'चिन्त्यमा', २. 'फलन्ति यत्ना भूयोऽस्य नश्य' क. ख. ग. च., 'फलन्ति यत्ना भूयस्यो नश्य' ङ. पाठः.

जन्मोत्कृष्टकुले भूयो भक्तिश्च पुनरच्युते ।
उत्कृष्टतम एव स्यात् तथा जन्मनि जन्मनि ॥ १४ ॥
अक्लिष्टमष्टधैश्वर्यं तत्प्रसादाद् भविष्यति ।
विहरेदिच्छया दीर्घं निर्वाणं वा तथाप्नुयात् ॥ १५ ॥
भक्तेष्वस्य प्रसादेन भवितव्यं तु सर्वथा ।
भ्रष्टोऽपि विविधान् कामानाप्नुयान्न विमुच्यते ॥ १६ ॥
किन्तु कर्मानुबन्धेन संसारे क्लेशसम्भवः ।
तस्मात् तद्भक्तिरेवास्य संपदां कारणं भवेत् ॥ १७ ॥
तज्ज्ञानेन नृणां भक्तिर्वर्धनीया प्रयत्नतः ।
वर्धिता तु विशेषेण सैनं नयति सत्पथम् ॥ १८ ॥
तस्मात् कार्यो विवेकोऽत्र गुणदोषा यथा स्थिताः ।
चिन्तयेदखिलान् दोषानेकान्ते शुद्धमानसः ॥ १९ ॥
कामकोपादिभिर्मुक्तं[1] मनः शुद्धं भविष्यति ।
अभ्यासेन भवेच्छुद्धिर्मनसो योगवर्त्मनि ॥ २० ॥
शुद्धे मनसि तद्भक्तिर्जायते तस्य निश्चला ।
तस्यां समुपजातायां तत्त्वे चेतोऽवतिष्ठते ॥ २१ ॥
रागद्वेषपरीतस्य विफलं तत्त्वदर्शनम् ।
तस्मात् तौ पूर्वमुत्सार्यौ तत्त्वं[2] सम्यग् दिदृक्षुणा ॥ २२ ॥
पुण्यदेशेषु दृष्टेषु भयेषु मरणेषु च ।
तथा रोगावमानेषु वैराग्यमुपजायते ॥ २३ ॥
मरणादिषु दृष्टेषु स्वयमेव समाहितः ।
बुद्ध्या विवेकमातिष्ठेन्नित्यं वैराग्यकारणम् ॥ २४ ॥

---

१. 'क्रोधादि' ङ. च. पाठः. २. 'सत्त्वं' च. पाठः.

विवेकाज्जायते भक्तिर्वैराग्यं चास्य सर्वदा ।
ततस्तत्त्वगता बुद्धिर्भविष्यत्यनपायिनी ॥ २५ ॥
न भोगेषु प्रसक्तः स्यान्न कुर्याद् दुर्लभे मतिम् ।
अल्पेन परितुष्टः स्यान्नित्यं भागवतो बुधः ॥ २६ ॥
विपाकं कर्मणामेव पश्येत् पश्यन् प्रियाप्रिये ।
इदं युक्तमिदं नेति नानुशोचेत् कदाचन ॥ २७ ॥
प्रभुत्वं नात्मनः किञ्चिदिति पश्येद् विवेकवान् ।
घोषयेन्नैव कृत्यानि न कुर्यात् संभ्रमं क्वचित् ॥ २८ ॥
न चाकाङ्क्षेद् यशः किञ्चिद् देवदेवस्य पूजनात् ।
यथा मनः प्रियेष्वेवं सक्तं देवे च भावयेत् ॥ २९ ॥
नित्यं भक्तौ तु जातायां जायते तत्त्वदर्शनम् ।
तत्त्वविद् यत्र तत्रस्थो मुक्तसङ्गः परिव्रजेत् ॥ ३० ॥
एक एव पुनस्तीर्थं क्षेत्रं चानुव्रजेत् सदा ।
भक्त्या देवमनुध्यायेत् तन्निष्ठस्तत्परायणः ॥ ३१ ॥
अन्तकाले च तं स्मृत्वा तत्सायुज्यमवाप्नुयात् ।
विरक्तोऽखिलतत्त्वानि विलाप्य परमात्मनि ॥ ३२ ॥
कृत्वा निर्विषयं चित्तमुदासीनो विमुच्यते ।
ऐश्वर्येऽपि स्थितो योगी न देवं जातु विस्मरेत् ॥ ३३ ।
यतः कालक्रमेण स्यादुपघातोऽन्यथा ध्रुवम् ।
सायुज्यं प्रतिपन्नास्तु ये भक्ताः शुद्धचेतसः ॥ ३४ ॥
ते विष्णोः किङ्करा नित्यं भवन्ति निरुपद्रवाः ।
तेषां भक्त्यपराधेन संसारः संभवेत् पुनः ॥ ३५ ॥

१. 'पा' क. पाठः.

अन्यथा स्थितिरेव स्याद् वैराग्यान्मुक्तिरेव वा ।
निवृत्तास्तु विशिष्यन्ते सर्वेभ्यस्तत्त्वदर्शिनः ॥ ३६ ॥
नैव तेषां भवो भूयः प्रमादो वेह कश्चन ।
मुक्तिरेव तु विज्ञेया गतीनामुत्तमा गतिः ॥ ३७ ॥
अन्यास्तु गतयः सर्वाः सप्रमादाः स्युरध्रुवाः ।
तथापि मतिवैचित्र्यादुभयं संमतं नृणाम् ॥ ३८ ॥
ऐश्वर्यमपवर्गो वा कस्यचित् किञ्चिदेव तु ।
तद्गता भक्तिरेवैषामुभयस्यापि साधनी[1] ॥ ३९ ॥
समाधेर्वर्धमानस्य[2] विभागाद् भेदकारिणः ।
सत्त्वस्थे यत्नतश्चित्ते योगाङ्गानि निषेवते ॥ ४० ॥
तेषु स्थित्वा स्मरेद् विष्णुमेकाग्रेण तु चेतसा ।
तमः क्षरति तेनास्य रजश्च वशिनः क्रमात् ॥ ४१ ॥
ततो जन्मभिरुत्कृष्टैः[4] सिद्धिमेवाधिगच्छति ।
यदा तु सत्त्वमातिष्ठेदस्पृष्टो रजसा क्वचित् ॥ ४२ ॥
ततोऽस्य मुक्तिरेव स्यात् सायुज्यं वा महात्मनः ।
तस्माद् भक्तिं सदान्विच्छेद् यास्य सर्वस्य कारणम् ॥
भक्तावव्यवमानायां भवेच्छ्रेयोऽस्य नान्यथा ।
अन्तरायास्तु ये नित्यं योगाभ्यासस्य दूषकाः ॥ ४४ ॥
तेषु प्रसज्यमानेषु तत्त्वदर्शनमाश्रयेत् ।
नातिवेलं सदाभ्यस्येन्न शरीरं च पीडयेत् ॥ ४५ ॥
विषयेभ्योऽपि यत्नेन निवर्तेत शनैः शनैः ।
अपूर्वदर्शने चैव लोकवादाश्रये तथा ॥ ४६ ॥

---

१. 'व स्यादुभ' ख. ग. पाठः. २. 'धि' च. पाठः. ३. 'धौ
र्वतमा' ख. ग. पाठः. ४. 'ष्टः' ङ. पाठः.

मोघचिन्ताप्रसङ्गे च योगमिच्छेन्नरो बुधः ।
निवृत्तेष्वेषु सर्वेषु भक्तिः पुंसो विवर्धते ॥ ४७ ॥
विषया दुस्त्यजाः सेव्या धर्मशास्त्राविरोधिनः ।
बह्वपायत्वयोगेन यत्नात् येच्छां निवर्तयेत् ॥ ४८ ॥
येभ्यो निवर्तमानस्य मनः शुद्धं भवेत् सदा ।
निवृत्तेरभ्युपायश्च शुद्धिरेव परात्मनः ॥ ४९ ॥
शुद्धावाद्रियमाणायां बीभत्सुर्विषयेष्वयम् ।
जायते नाशुचिष्वेव संसर्गोऽस्य भविष्यति ॥ ५० ॥
अशुचीनामसंसर्गाच्चित्तमस्य प्रसीदति ।
प्रमादे निःस्पृहस्यास्य भक्तिर्मुक्तिस्ततो ध्रुवा ॥ ५१ ॥
शब्दादिविषयाञ् जित्वा रुद्ध्वा द्वाराणि सर्वशः ।
प्रविलाप्येन्द्रियाण्यन्तश्चिन्तयेत् परमं पदम् ॥ ५२ ॥
संयम्य मारुतान् पञ्च योगमभ्यासेन योगवित् ।
स्थिरीकृतमना नित्यं ध्यायेत् तत् परमं पदम् ॥ ५३ ॥
वर्णांश्च पञ्चवायूनामन्तस्थानां विचिन्तयेत् ।
मध्ये मध्ये तु पूर्वेषां क्रमाद् ध्येयाः परे परे ॥ ५४ ॥
काशवर्णो भवेद् प्राणो रक्तोऽपानोऽस्य मध्यगः ।
विद्युत्स्फुरितवद् व्यान उदानः कुन्दसन्निभः ॥ ५५ ॥
समानस्तु ततो ध्येयः शुद्धस्फटिकसन्निभः ।
एवं ध्यात्वा निरुध्यान्तः क्रमशः पञ्च मारुतान् ॥ ५६ ॥
षडङ्गानि च विज्ञाय प्रयुञ्जीत यथाविधि ।
प्राणायामोऽत्र पूर्वं तु प्रत्याहारोऽथ धारणा ॥ ५७ ॥

ततस्तर्कः समाधिश्च ध्यानं चाङ्गानि षट् क्रमात् ।
ये प्रोक्ता योगिभिः पूर्वं पूररेचककुम्भकाः ॥ ५८ ॥
प्राणायामास्तु विज्ञेया मात्राभिस्ते पृथक् क्रमात् ।
जानुं प्रदक्षिणीकृत्य न द्रुतं न विलम्बितम् ॥ ५९ ॥
क्रियते योऽङ्गुलिस्फोटः सा मात्रेह प्रकीर्तिता ।
यदा द्वादशमात्राभिः पूरकः क्रियते तदा ॥ ६० ॥
रेचको द्विगुणाभिः स्यात् त्रिगुणाभिश्च कुम्भकः ।
प्राणानां यस्त्विहायामः क्रमादेवं प्रकीर्तितः ॥ ६१ ॥
सर्वशास्त्रेषु शास्त्रज्ञैः प्राणायामः स उच्यते ।
धारणा तु भवेद् या सा प्राणायामैस्त्रिभिः स्मृता ॥ ६२ ॥
श्यामा पीतारुणा शुक्ला क्रमाज्ज्ञेया च धारणा ।
नाभिमध्यगतेनादौ बीजेन पुरुषात्मना ॥ ६३ ॥
वायव्या धारणा कार्या सा श्यामा पूरकात्मिका ।
ततो विश्वात्मबीजेन रक्तेन हृदि या कृता ॥ ६४ ॥
आग्नेयी सा समुद्दिष्टा द्वितीया रेचका मता ।
कण्ठे निवृत्तिबीजेन पीतेन क्रियते तु या ॥ ६५ ॥
माहेन्द्री सा समुद्दिष्टा धारणा कुम्भकात्मिका ।
मूर्ध्नि सर्वात्मबीजेन शुक्लेनैतैस्त्रिभिस्त्रिभिः ॥ ६६ ॥
क्रियते धारणा यान्त्या वारुणी सा प्रकीर्तिता ।
स्थितेषु तेषु बीजेषु चैतन्यं धार्यते यदा ॥ ६७ ॥
तद्गुणान्वितमित्येवं जगत् सर्वं तदा स्मरेत् ।
नाभ्यादिषु यथोद्दिष्टं बीजं भूतगुणात्मकम् ॥ ६८ ॥

---

१. 'भिस्तु त्रि' च. पाठः. २. 'प्रधारणा भ', ३. 'णा', ४. 'त', ५. 'की स्मृता', ६. 'सा', ७. 'वं' ख. ग. पाठः.

क्रियाभिर्धार्यते याभिस्तत्क्रिया धारणा मता ।
अन्वयव्यतिरेकाभ्यां यस्माद् यदुपलभ्यते ॥ ६९ ॥
धारणादिषु कालेषु स तर्कः सम्प्रकीर्तितः ।
आवपयासरूपेण यथाकर्म गुणात्मकम् ॥ ७० ॥
समाधिश्चेह विज्ञेयो धारणाभिस्त्रिभिस्त्रिभिः ।
ध्यातृध्येयस्वरूपं यत् तत्र रुन्ध्यात् प्रदर्शनम् ॥ ७१ ॥
समाधित्रि[1]गुणं यावदेवं ध्यानस्य लक्षणम् ।
एवं सर्वात्मना यस्यं ज्ञ[2]येस्तुल्यः कथञ्चन ॥ ७२ ॥
योगोऽसौ योगिभिः प्रोक्तो विज्ञानक्रमयोगतः ।
गुणानां यः समाहारः सहायस्य च चेतसः ॥ ७३ ॥
सद्भावभावतो बुद्ध्या स योगश्चेह कीर्तितः ।
स च ज्ञानक्रियाभेदाद् ज्ञेयो योगो द्विधा बुधैः ॥ ७४ ॥
अन्तःकरणवृत्त्या या तेषामात्मैकता मता ।
ज्ञानयोगः स उ[3]द्दिष्टः कर्मयोगः क्रियात्मकः ॥ ७५ ॥
इष्टादौ कर्मयोगेन ज्ञानयोगेन तं यजेत् ।
कायिकैर्वाचिकैश्चैव मानसैश्च पुनः क्रमात् ॥ ७६ ॥
स्थूले निवेशितं चित्त पुनः सूक्ष्मे निवेशयेत् ।
पररूपे यदा युक्तस्तदासौ मुक्त उच्यते ॥ ७७ ॥
परात्परतरं ज्योतिश्चिद्रूपमचलं ध्रुवम् ।
यः प्रपश्यति बुद्ध्यासौ न पुनर्भुवि जायते ॥ ७८ ॥
तस्मात् सर्वप्रयत्नेन भक्तो योगी भवेत् सदा ।
युक्तो दे[4]वमुपासीत सिद्धिरेवं भविष्यति ॥ ७९ ॥

---

१. 'स्त्रि' क. पाठः. २. 'च्च', ३. 'मु', ४. 'वैतमु' ख. ग. पाठः.

एवं ते सकलाख्याता मयाल्पा विष्णुसंहिता ।
साक्षाद्विष्णुमुखादेषा मया प्राप्ता युगान्तरे ॥ ८० ॥
ज्ञानानां परमं ज्ञानं गुह्यानां गुह्यमुत्तमम् ।
हितानां च हितं नान्यदतो रक्ष्यमिदं त्वया ॥ ८१ ॥
यथाहं श्रुतवान् पूर्वं साक्षाद् भगवतो मुखात् ।
तथेदमखिलं तन्त्रं मया तुभ्यं निवेदितम् ॥ ८२ ॥
नादीक्षिताय दातव्यं नासंवत्सरवासिने ।
नाभक्तायाविनीताय नान्यभक्ताय वा कचित् ॥ ८३ ॥
कृतज्ञाय[1] विनीताय शुचये ब्रह्मचारिणे ।
वक्तव्यं सर्वथाचार्यैरित्येवं विष्णुशासनम् ॥ ८४ ॥
गुप्तं हि स्थापयेत् सर्वमगुप्तं नाशयेन्नरः ।
तस्मात् सर्वप्रयत्नेन गोप्यमेतत् सदा बुधैः ॥ ८५ ॥
यः पठेच्छृणुयान्नित्यं श्रावयेद् वा समाहितः ।
सर्वपापविनिर्मुक्तो विष्णुलोके महीयते ॥ ८६ ॥
तस्माद् भक्तैरिदं नित्यमध्येयं श्राव्यमेव च ।
पुस्तके लिखितं नित्यं[2] पूजनीयं प्रयत्नतः ॥ ८७ ॥
यत्रेदं प्रयतैर्नित्यं पूज्यते पुस्तके[3]स्थितम् ।
न तत्र व्याधिचोरादिभयं किञ्चित् प्रजायते ॥ ८८ ॥
तस्मात् सर्वप्रयत्नेन गृहे सततमर्चयेत् ।
स्थापयेद् गोपयेच्चात्र वर्धते श्रीरचञ्चला ॥ ८९ ॥

इति विष्णुसंहितायां[4] त्रिंशः पटलः ॥

---

शुभं भूयात् ।

१. 'कर्मज्ञा' च. पाठः. २. 'त्यमर्चनीयं प्रयत्नतः', ३. 'के', ख. ग. पाठः. ४. 'यां योगपटलस्त्रिंशः' च. पाठः.

# श्लोकानुक्रमणी

अ

द

## ह

—०—

